**तक्षकायनमः.। मध्ये - कालीये नमः।**

**ॐ अभीष्ट.......एकादशमावरणार्चनम्।।** पुष्पाञ्जलि प्रदान करें। पूजिताः तर्पिताः सन्तुः कहकर अर्घपात्र जल से तृप्त करें।

**अथ द्वादशमावरणम्** - (अष्टदले कर्णिका वहिः) - **पूर्वादि क्रमेण अष्टभैरवान् सम्पूज्य। ॐ असितांगभैरवाय सशक्तिं श्री पा. पू. न. त.। रुरुवभैरवाय सशक्तिं.। चण्डभैरवाय सशक्तिं.। क्रोधभैरवाय सशक्तिं.। उन्मत्तभैरवाय सशक्तिं.। कपालिभैरवाय सशक्तिं.। भीषणभैरवाय सशक्तिं.। संहारभैरवाय सशक्तिं श्री पा. पू. न. त.।**

**ॐ अभीष्ट.......द्वादशमावरणार्चनम्।।** पुष्पाञ्जलि प्रदान करें। **पूजिताः तर्पिताः** सन्तुः कहकर अर्घपात्र जल से तृप्त करें।

**अथ त्रयोदयशमावरणम्** - भूपूरे - वैसे भूपूर में अष्टसिद्धि, ग्रह, उपग्रह, पीठ, उपपीठ एवं दिक्पालादि का पूजा विधान है। (नरपतिजयचर्या) **अष्टसिद्धिं - अणिमा सिद्धि श्री पा. पू. न. त.। लघिमा.। महिमा.। ईशित्व सिद्धि.। वशित्व सिद्धि.। प्राकाम्य सिद्धि.। भुक्ति सिद्धि.। इच्छा सिद्धि.।**

ॐ अभीष्ट....... **त्रयोदशमावरणार्चनम्।।** पुष्पाञ्जलि प्रदान करें। पूजिताः तर्पिताः सन्तुः कहकर अर्घपात्र जल से तृप्त करें।

**अथ चतुर्दशमावरणम्** - (भूपूरे) - **इन्द्राय नमः श्री पा. पू. त.। अग्नये नमः.। यमाय नमः.। निर्ऋत्ये नमः.। वरुणाय नमः.। वायवे नमः.। कुबेराय नमः.। ईशानाय नमः.। ब्रह्मणे नमः.। अनन्ताय नमः श्री पा. पू. त.।**

**ॐ अभीष्ट....... चतुर्दशावरणार्चनम्।।** पुष्पाञ्जलि प्रदान करें। **पूजिताः तर्पिताः** सन्तुः कहकर अर्घपात्र जल से तृप्त करें।

**अथ पञ्चदशावरणम्** - (भूपुरे) - **वज्राय नमः श्री पा. पू. त.। शक्तये नमः.। दण्डाय नमः.। खड्गाय नमः.। पाशाय नमः.। अङ्कुशाय नमः.। गदाय नमः.। त्रिशूलाय नमः.। पद्माय नमः.। चक्राय नमः.।**

**ॐ अभीष्ट सिद्धिं मे देहि शरणागत वत्सले।**
**भक्त्या समर्पये तुभ्यं पञ्चदशावरणार्चनम्।।**

पुष्पाञ्जलि देवें। **पूजिताः** तर्पिताः सन्तुः से अर्चेन संतृप्त। फिर धूप दीप नैवेद्य अर्पण कर नीराजन करें।

## ॥ श्रीमहामृत्युञ्जय सहस्रनाम स्तोत्रम् ॥

विनियोग :- अस्य श्रीमहामृत्युञ्जय सहस्रनाम स्तोत्रस्य भैरवऋषिरुष्णिक् छन्दः श्रीमहामृत्युञ्जयरुद्रो देवता। ॐ बीजं जूं शक्तिः सः कीलकं मम सर्वविधरोगादिशमनपूर्वकं दीर्घायुः प्राप्तये पाठे विनियोगः।

ऋष्यादिन्यास :- भैरवऋषये नमः ( शिरसि ), उष्णिक्छन्दसे नमः ( मुखे ), श्रीमहामृत्युञ्जयरुद्रदेवतायै नमः ( हृदये ), ॐ बीजाय नमः ( गुह्ये ), जूं शक्तये नमः ( पादयोः ), सः कीलकाय नमः ( नाभौ ) विनियोगाय नमः सर्वाङ्गे।

कर-हृदयादिन्यासः :- ॐ ( अंगु० हृदयाय नम० ), जूं ( तर्जनी० शिरसे० ), सः ( मध्यमा० शिखायै० ) ॐ ( अना० कवचाय० ), जूं ( कनि० नेत्र० ), सः ( कर० अस्त्राय० )

॥ ध्यानम् ॥

उद्यच्चन्द्र समानदीप्तिममृतानन्दैकहेतुं शिवं,
ॐ जूं सः भुवनैकसृष्टिप्रलयोद् भूतैकरक्षाकरम् ।
श्रीमत्तारदशार्णमण्डिततनुं त्र्यक्षं द्विबाहुं परं,
श्रीमृत्युञ्जयमीड्य विक्रमगुणैः पूर्ण हृदयाब्जे भजे ॥

॥ भैरव उवाच ॥

ॐ जूं सः हौं महादेवो मन्त्रोशो मन्त्रनायकः ।
मानी मनोरमाङ्गश्च मनस्वी मानवर्धनः ॥१॥
मायाकर्ता मल्लरूपो मल्लमारान्तको मुनिः ।
महेश्वरो महामान्यो मन्त्री मन्त्रजनप्रियः ॥२॥
मारुतो मरुतां श्रेष्ठो मासिकः पाक्षिकोऽमृतः ।
मातङ्गो मात्तचित्तो मत्तचिन्मत्तभावनः ॥३॥
मानवेष्टप्रदो मेशो मानकीपति वल्लभः ।
मानकायो मधुस्तेयी मारयुक्तो जितेन्द्रियः ॥४॥
जयो विजयदो जेता जयेशो जयवल्लभः ।
डामरेशो विरूपाक्षो विश्वभक्तो विभावसुः ॥५॥

विश्वेशो विश्वतातश्च विश्वसूर्विश्वनायकः ।
विनीतो विनयी वादी वान्तदो वाग्भवो वटुः ॥६॥
स्थूलः सूक्ष्मश्चलो लोलो ललज्जिह्वाकरालकः ।
वीरध्येयो विरागीणो विलासी लास्यलालसः ॥७॥
लोलाक्षो ललधीर्धर्मी धनदो धनदार्चित्तः ।
धनी ध्येयोऽप्यध्येयश्च धर्मी धर्ममयोदयः ॥८॥
दयावान् देवजनको देवसेव्यो दयापतिः ।
दुर्णिचक्षुर्दरीवासो दम्भी देवदयात्मकः ॥९॥
कुरूपः कीर्तिदः कान्तः क्लीबः क्लीबात्मकः कुजः ।
बुधो विद्यामयः कामी कामकालान्धकान्तकः ॥१०॥
जीवो जीवप्रदः शुक्रः शुद्धः शर्मप्रदोऽनघः ।
शनैश्चरो वेगगतिर्वाचालो राहुरव्ययः ॥११॥
केतु राकापतिः कालः सूर्योऽमितपराक्रमः ।
चन्द्रो भद्रप्रदो भास्वान् भाग्यदो भर्गरूपभृत् ॥१२॥
कूर्तो धूर्तो वियोगी च संगी गङ्गाधरो गजः ।
गजाननप्रियो गीतो ज्ञानी स्नानार्चनः प्रियः ॥१३॥
परमः पीवराङ्गश्च पार्वती बल्लभो महान् ।
परात्मको विराड्वास्यो वानरोऽमितकर्मकृत् ॥१४॥
चिदानन्दी चारुरूपो गारुडो गरुडप्रियः ।
नन्दीश्वरो नयो नागो नागालङ्कारमण्डितः ॥१५॥
नागहारो महानागी गोधरो गोपतिस्तपः ।
त्रिलोचनस्त्रिलोकेश स्त्रिमूर्तिस्त्रिपुरान्तकः ॥१६॥
त्रिधामयो लोकमयो लोकैकव्यसनापहः ।
व्यसनी तोषितः शम्भुस्त्रिधारूपस्त्रिवर्णभाक् ॥१७॥
त्रिज्योतिस्त्रिपुरीनाथस्त्रिधाशान्तिस्त्रिधा गतिः ।
त्रिधा गुणी विश्वकर्ता विश्वभर्ता त्रिपुरुषः ॥१८॥
उमेशो वासुकिर्वीरो वैनतेयो विचारकृत् ।

विवेकाक्षो विशालाक्षो विधिर्विधिरनुत्तमः ॥१९॥
विद्यानिधिः सरोजाक्षो निःस्मरः स्मरशासनः ।
स्मृतिदः स्मृतिमान् स्मार्तो ब्रह्मा ब्रह्मविदां वरः ॥२०॥
ब्राह्मी व्रती ब्रह्मचारी चतुरश्चतुराननः ।
चलाचलोऽचलगतिर्वेगी वीराधिपोऽपरः ॥२१॥
सर्ववासः सर्वगतिः सर्वमान्यः सनातनः ।
सर्वव्यापी सर्वरूपः सागरश्च समेश्वरः ॥२२॥
समनेत्रः समद्युतिः समकायः सरोवरः ।
सरस्वान् सत्यवाक् सत्यः सत्यरूपः सुधीः सुखी ॥२३॥
स्वराट् सत्यः सत्यमती रुद्रो रुद्रवपुर्वसुः ।
वसुमान् वसुधानाथो वसुरूपो वसुप्रदः ॥२४॥
ईशानः सर्वदेवानामीशानः सर्वबोधिनाम् ।
ईशोऽवशेषोऽवयवी शेषशायी श्रियः पतिः ॥२५॥
इन्द्रश्चन्द्रावतंसी च चराचरजगत्पतिः ।
स्थिरः स्थाणुरणुः पीनः पीनवक्षाः परात्परः ॥२६॥
पीनरूपो जटाधारी जटाजूटसमाकुलः ।
पशुरूपः पशुपतिः पशुज्ञानी पयोनिधिः ॥२७॥
वेद्यो वैद्यो वेदमयो विधिज्ञो विधिमान् मृदुः ।
शूली शुभङ्कर शोभ्यः शुभकर्ता शचीपतिः ॥२८॥
शशाङ्कधवलः स्वामी वज्री शङ्खी गदाधरः ।
चतुर्भुजश्चाष्टभुजः सहस्रभुज मण्डित ॥२९॥
स्रुवहस्तो दीर्घकेशो दीर्घो दम्भविवर्जितः ।
देवो महोदधिर्दिव्यो दिव्यकीर्तिर्दिवाकरः ॥३०॥
उग्ररूपश्चोग्रपतिरुग्र - वक्षास्तपोमयः ।
तपस्वी जटिलस्तापी तापहा तापवर्जितः ॥३१॥
हरिद्धयो हयपतिर्हयदो हरिमण्डितः ।
हरिवाही महौजस्को नित्यौ नित्यात्मकोऽनलः ॥३२॥

समानी संसृतिस्त्यागी सङ्गी सन्निधिरव्ययः ।
विद्याधरो विमानी वैमानिक वरप्रदः ॥३३॥
वाचस्पति वमासारी वामाचारी बलन्धरः ।
वाग्भवो वासवो वायुर्वासनाबीजमण्डितः ॥३४॥
वाग्मी कौलश्रुतिर्दक्षो दक्षयज्ञविनाशनः ।
दक्षो दौर्भाग्यहा दैत्यमर्दनो भोगवर्धनः ॥३५॥
भोगी रोगहरो योगी हारी हरिविभूषणः ।
बहुरूपो बहुमतिर्वङ्गवित्ती विचक्षणः ॥३६॥
नृत्तकृच्चित्तसन्तोषी नृत्यगीतविशारदः ।
शरदवर्णविभूषाढ्यो गलदग्धोऽघनाशनः ॥३७॥
नागी नागमयोऽनन्तोऽनन्तरूपः पिनाकभृत् ।
नटलो कारकेशानो वरीयान् वै विवर्णभृत् ॥३८॥
साङ्कारष्टङ्कहस्तश्च पाशीशार्ङ्गः शशिप्रभः ।
सहस्त्ररूपी समगुः साधूनामभयप्रदः ॥३९॥
साधुसेव्यः साधुगतिः सेवाफलप्रदो विभुः ।
स्वमहो मध्यमो मत्तो मन्त्रमूर्तिः सुमन्तकः ॥४०॥
कीलालीलाकरो लूतो भवबन्धैकमोचनः ।
रेचिष्णुर्विच्युतरतोऽमूतनो नूतनो नथः ॥४१॥
न्यग्रोधरूपो भयदो भयहारीतिधारणः ।
धरणीधरसेव्यश्च धराधरसुतापतिः ॥४२॥
धराधरोऽन्धकरिपुर्विज्ञानी मोहवर्जितः ।
स्थाणुः केशो जटी ग्राम्यो ग्रामारामो रमाप्रियः ॥४३॥
प्रियकृत प्रियरूपश्च विप्रयोगी प्रतापनः ।
प्रभाकर प्रभादीप्तो मनुमान् मानवेश्वरः ॥४४॥
तीक्ष्णबाहुस्तीक्ष्णकरस्तीक्ष्णां शुस्तीक्ष्णलोचनः ।
तीक्ष्णचित्तस्त्रयीरूपस्त्रयीमूर्तिस्त्रयी तनुः ॥४५॥
हविर्भुग् हविषां ज्योतिर्हालाहलो हलीपतिः ।

हविष्मल्लोचनो हालामयो हरिणरूपभृत् ॥४६॥
भ्रदिमाभ्रमयो वृक्षो हुताशो हुतभुग् गुणी ।
गुणज्ञो गरुडो गानतत्परो विक्रमी गुणी ॥४७॥
क्रमेश्वरः क्रमकरः कृमिकृत् क्लान्तमानसः ।
महातेजा महामारी मोहितो मोहवल्लभः ॥४८॥
मनस्वी त्रिदशो बालो वाल्यापतिरघापहः ।
बाल्यो रिपुहरो हार्यो गविर्गविमतो गुणः ॥४९॥
सगुणो वित्तराट् गेयो विरोचनो विभावसुः ।
मालामयो माधवश्च विकर्तनोऽविकत्थनः ॥५०॥
मानकृन्मुक्तिदोऽमूल्यः साध्यः शत्रुभयङ्करः ।
हिरण्यरेताः शुभगः सतीनाथः सुरापतिः ॥५१॥
मेढ़ो मैनाकभगिनीपतिरुत्तमरूपभृत् ।
आदित्यो दितिजेशानो दितिपुत्रः क्षयङ्करः ॥५२॥
वासुदेवो महाभाग्यो विश्वावसुर्वसुप्रियः ।
समुद्रोऽमिततेजश्च खगेन्द्रो विशिखी शिखी ॥५३॥
गुरुत्मान् वज्रहस्तश्च पौलोमीनाथ ईश्वरः ।
यज्ञिपेयो वाजपेयः शतिक्रतुः शताननः ॥५४॥
प्रतिष्ठस्तीव्रविस्रम्भी गम्भीरो भाववर्धनः ।
मायिष्ठो मधुरालापो मधुमत्तश्च माधवः ॥५५॥
मायात्मा भोगिनां त्राता नाकिनामिष्टदायकः ।
नाकेन्द्रो जनको जन्यस्तम्भनो रम्भनाशनः ॥५६॥
ईशान ईश्वर ईशः शर्वरीपति शेखरः ।
लिङ्गाध्यक्षः सुराध्यक्षो वेदाध्यक्षो विचारकः ॥५७॥
भव्योऽनर्घो नरेशानो नरकान्तकसेवितः ।
चतुरो भविता भावी विरामो रात्रिवल्लभः ॥५८॥
मङ्गलो धरणीपुत्रो धन्यो बुद्धि विवर्धनः ।
जयो जीवेश्वरो जारो जाठरो जह्नुतापनः ॥५९॥

जह्नुकन्याधरः कल्पो वासरो मास एव च ।
कर्तुर्ऋभुसुताध्यक्षो विहारो विहगापतिः ॥६०॥
शुक्लाम्बरो नीलकण्ठः शुक्लो भृगुसुतो भगः ।
शान्तः शिवप्रदो भव्यो भेदकृच्छान्तकृत्पतिः ॥६१॥
नाथो दान्तो भिक्षुरूपो धन्यश्रेष्ठो विशाम्पतिः ।
कुमारः क्रोधनः क्रोधी विरोधि विग्रही रसः ॥६२॥
नीरसः सुरसः सिद्धो वृषणी वृषघातनः ।
पञ्चास्यः षण्मुखश्चैव विमुखः सुमुखी प्रियः ॥६३॥
दुर्मुखो दुर्जयो दुःखी सुखी सुखविलासदः ।
पात्री पौत्री पवित्रश्च भूतोक्त पूतनान्तकः ॥६४॥
अक्षरं परमं तत्त्वं बलवान् बलघातनः ।
भल्ली मौलिभवाभावो भावाभावविमोचनः ॥६५॥
नारायणो युक्तकेशो दिग्देवो धर्मनायकः ।
कारामोक्षप्रदो जेयो महाङ्ग सामगायनः ॥६६॥
उत्सङ्गमो नामकारी चारी स्मरनिषूदनः ।
कृष्णः कृष्णाम्बरः स्तुत्यस्तारावर्णस्त्रयाकुलः ॥६७॥
त्रियामा दुर्गतित्राता दुर्गमो दुर्गघातकः ।
महानेत्रो महाधाता नानाशस्त्रविचक्षणः ॥६८॥
महामूर्धा महादन्तो महाकर्णो महोरगः ।
महाचक्षुर्महानाशो महाग्रीवो दिगालयः ॥६९॥
दिग्वासा दितिजेशानो मुण्डी मुण्डाक्षसूत्रधृत् ।
स्मशाननिलियो रागी महाकटिरनूतनः ॥७०॥
पुराणपुरुषः पारम्परमात्मा महाकरः ।
महालस्यो महाकेशो महेशो मोहनो विराट् ॥७१॥
महासुखो महाजङ्घो मण्डली कुण्डली नटः ।
असपत्न्यः पत्रकरः पत्रहस्तश्च पाटवः ॥७२॥
लालसः सालसः सालः कल्पवृक्षश्च कल्पितः ।

कल्पहा कल्पनाहारी महाकेतुः कठोरकः ॥७३॥
अनलः पवनः पाठः पीठस्थ पीठरूपकः ।
पाठीनः कुलसी पीनो मेरुधामा महागुणी ॥७४॥
महातूणीरसंयुक्तो देवदानवदर्पहा ।
अथर्वशेषः सौम्यास्य ऋक्सहस्त्रामितेक्षणः ॥७५॥
यजुः साममुखो गुह्यो यजुर्वेदविचक्षणः ।
याज्ञिको यज्ञरूपश्च यज्ञो वै धरणीपतिः ॥७६॥
जङ्गमी भङ्गदी भासा दक्षाभिगमदर्शनः ।
अगम्यः सुगमः खर्व खेटी खेटाननो नयः ॥७७॥
अमोघार्थः सिन्धुपतिः सैन्धवः सानुमध्यगः ।
विकालज्ञः सगणकः पुष्करस्थः परोपकृत् ॥७८॥
उपकर्ताऽपकर्ता च घृणी रणभयप्रदः ।
धर्मा चर्माम्बरश्चारूरूपश्चारु विभूषणः ॥७९॥
नक्तञ्चरः कायवशी वशी वशिवशो वशः ।
वश्या वश्यकरो भस्मशायी भस्मविलेपनः ॥८०॥
भस्माङ्गी मलिनाङ्गश्च मालामण्डितमूर्धजः ।
गणकार्यः कुलाचारः सर्वाचारः सखा समः ॥८१॥
मकरो गोत्रभिद् गोप्ता भीमरूपो भयानकः ।
अरुणश्सचैकवित्तश्च त्रिशङ्कुः शङ्कुधारणः ॥८२॥
आश्रमी ब्राह्मणो वज्री क्षत्रियः कार्यहेतुकः ।
वैश्यः शूद्रः कपोतस्थस्त्वरुष्टोऽथ रुषाकुलः ॥८३॥
रोगी रोगापहा शूरः कपिलः कपिनायकः ।
पिनाकीचाष्टमूर्तिश्च क्षितिमान् धृतिमांस्तथा ॥८४॥
जलमूर्तिर्वायुमूर्तिर्गताशः सोममूर्तिमान् ।
सूर्यदेवो यजमान आकाशः परमेश्वरः ॥८५॥
भवहा भवमूर्तिश्च भूतात्मा भूतभावनः ।
भवः शर्वस्तथा रुद्रः पशुनाथश्च शङ्करः ॥८६॥

गिरिजो गिरिजानाथो गिरिन्द्रश्च महेश्वरः ।
भीम ईशान भीतिघ्नः खण्डपश्चण्डविक्रमः ॥८७॥
खण्डभृत् खण्डपरशुः कृत्तिवासा वृषापहः ।
कङ्काल कलनाकार श्रीकण्ठो नीललोहितः ॥८८॥
गुणीश्वरो गुणी नन्दी धर्मराजो दुरन्तकः ।
भृङ्गरीटी रसासारी दयालु रूपमण्डितः ॥८९॥
अमृतः कालरुद्रश्च कालाग्निः शशिशेखरः ।
त्रिपुरान्तक ईशानस्त्रिनेत्रः पञ्चवक्त्रकः ॥९०॥
कालहृत् केवलात्मा च ऋग्यजु सामवेदवान् ।
ईशानः सर्वभूतानामीश्वरः सर्वरक्षसाम् ॥९१॥
ब्रह्मणोऽधिपतिर्ब्रह्म ब्रह्मणोऽधिपतिस्था ।
ब्रह्मा शिवः सदानन्दी सदानन्दः सदाशिवः ॥९२॥
मेषस्वरूपश्चार्वङ्गो गायत्रीरूपधारणः ।
अघोरेभ्योऽथ घोरेभ्यो घोरघोरतराय च ॥९३॥
सर्वतः सर्वसर्वेभ्यो नमस्ते रुद्र रूपिणे ।
वामदेवस्तथा ज्येष्ठः श्रेष्ठः कालकराकलः ॥९४॥
महाकालो भैरवेशो वेशा कलविकारणः ।
बलविकारणो बालो बलप्रमथनस्तथा ॥९५॥
सर्वभूताद्दिदमनो देवदेवो मनोन्मनः ।
सद्योजातं प्रपद्यामि सद्योजाताय वै नमः ॥९६॥
भवे भवेनातिभवे भवस्व मां भवोद्भवः ।
भवनो भावनो भाव्यो बलकारी परःपदम् ॥९७॥
परः शिवः परो ध्येयः परं ज्ञानं परात्परः ।
परावरः पलाशी च मांसाशी वैष्णवोत्तमः ॥९८॥
ॐ ऐं श्रीं हसौं देवः ॐ ह्रीं हैं भैरवोत्तमः ।
ॐ ह्रां नमः शिवायेति मन्त्रो वटुवरायुधः ॥९९॥
ॐ ह्रौं सदाशिवः ॐ ह्रीं आपदुद्धारणो मतः ।

ॐ ह्रीं महाकरालास्य ॐ ह्रीं बटुकभैरवः ॥१००॥
भर्गस्त्रियम्बक ॐ ह्रीं ॐ ह्रीं चन्द्रार्धशेखरः ।
ॐ ह्रीं सं जटिलो धूम्र ॐ ऐं त्रिपुरघातकः ॥१०१॥
ह्रां ह्रीं हं हरिवामाङ्ग ॐ ह्रीं हं ह्रीं त्रिलोचनः ।
ॐ वेदरूपो वेदज्ञ ऋग्यजुः सामरूपवान् ॥१०२॥
रुद्रो घोररवो घोर ॐ क्षं हं ह्रीं अघोरकः ।
ॐ जूं सः पीयूषसक्तोऽमृताध्यक्षोऽमृतालसः ॥१०३॥
ॐ त्र्यम्बकं यजामहे सुगंधिम् पुष्टिवर्धनम् ।
उर्व्वारुकमिव बन्धनान् मृत्योर्मुक्षीय माऽमृतात् ॥१०४॥
ॐ हौं जूं सः ॐ भूर्भुवः स्वः ॐ जूं सः मृत्युञ्जयः ।
पातु मा सर्वदेवेशो मृत्युञ्जय सदाशिवः ॥१०५॥

## ॥ अथ श्रीमहामृत्युञ्जय चिन्तामणि स्तोत्रम् ॥

॥ स्कन्द उवाच ॥

ह्रीं मत्या शिवया विराण्यमयमिदं हृत्पङ्कजस्थं सदा ।
ह्रींणानां शिवकीर्तने हितकरं लेखैर्हृदामानितम् ॥
ह्रीं वेरादिसुगन्धवस्त्र रुचिरं हेमाद्रिबाणासनम् ।
ह्रींकारादि कपालपीठ ममलं हृद्यं नटेशं भजे ॥
श्रीमज्ज्ञानसभान्तरे प्रविलसच्छ्रीपञ्चवर्णाकृतिम् ।
श्रीवाणीनुतपाददोपविचयं श्रीवल्लभेनार्चितम् ॥
श्रीविद्यामनुमोदनाश्रितजनं श्रीदायकं श्रीधरम् ।
श्रीचक्रान्तरवासगं शिवमहं श्रीमन्नटेशं भजे ॥
भव्याम्भोजमुखं निमज्जनविधौ नारायणेनर्चितम् ।
नाकौकोनगरी नटी लसितकं नागाजिनालंकृतम् ॥
नानारूप नर्तकादि चतुरं नीलाकजान् वेष्ठितम् ।
नादात्मानमहं नगेन्द्रतनयानाथं नटेशं भजे ॥
मध्यस्थं मधुवैरिवर्णितपदं मद्दंशनाथं प्रभुम् ।

मारातीतमतीव मञ्जुवपुषं मन्दारगौरप्रभम् ॥
मायातीत मशेष मङ्गलनिधिं मद्भावनाभावितम् ।
मध्ये व्योमसभागुहान्तमखिलं कर्पूरकाशं भजे ॥
शिष्टैः पूजितपादुकं शिवकरं शीतांशुरेखाधरम् ।
शिष्टान् भक्तजनान् सदासुखकरं नाथं शिवायाः प्रियम् ॥
क्षोणीरक्षणमम्बुजासनशिरः संहारशीलं प्रभुम् ।
शीतासार विलोचनं शिवमहं श्रीमन्नटेशं भजे ॥
वाणी वल्लभ वन्द्यवैभवयुतं वन्दारुचिन्तामणिम् ।
वाताशाधिपभूषणं वरकृपावारां निधिं योगिनाम् ॥
वाञ्छापूर्तिकरं बलारिविनुतं वाहीकृताम्नायकम् ।
वामांगत् तवराननं मम हृदोवासं नटेशं भजे ॥
यक्षाधीशसखं यमप्रमथनं यामिन्यधीशाननम् ।
यज्ञध्वंशकरं यतीन्द्रविनुतं यज्ञक्रियाधीश्वरम् ॥
याज्यं याजकरूपिणं यमधनैर्यत्नोपलभ्याङ्घ्रिकम् ।
यानीभूतवृषं सदाशिवमुमायुक्तं नटेशं भजे ॥
माया श्रीविलसत् चिदम्बर महापञ्चाक्षरैर्विंतान् ।
श्लोकान् सप्तपठन्ति येऽनु दिवसं चिन्तामणी नामकान् ॥
तेषां भाग्यामनेकमायुरधिकं विद्यां वरान् सद्सुतान् ।
सर्वाभीष्टमसौ ददाति सहसा श्रीचित् समाधीध्वरः ॥

*॥ इति श्रीमहामृत्युञ्जय चिन्तामणि स्तोत्रम् ॥*

## ॥ अथ श्रीसदाशिव मृत्युञ्जय स्तोत्रम् ॥

विनियोग – ॐ अस्य श्री सदाशिव स्तोत्र मन्त्रस्य मार्कण्डेय ऋषिः, अनुष्टुप्छन्दः, श्रीसदाशिवो देवता, गौरीशक्तिः, मम समस्तारिष्ट शान्त्यर्थे जपे विनियोगः।

रुद्रं पशुपतिं स्थाणु नीलकण्ठमुमापतिम् ।
नमामि शिरसा देवं किं नो मृत्यु करिष्यति ॥१॥

नीलकण्ठं विरूपाक्षं निर्म्मलं निरुपद्रवम् ।
नमामि शिरसा देवं किं नो मृत्यु करिष्यति ॥२॥
काल कण्ठं कालमृत्युं कालाग्निं कालनाशनम् ।
नमामि शिरसा देवं किं नो मृत्यु करिष्यति ॥३॥
देवदेवं महादेवं देवेशं वृषभध्वजम् ।
नमामि शिरसा देवं किं नो मृत्यु करिष्यति ॥४॥
वामदेवं महादेवं लोकनाथं जगद्गुरुम् ।
नमामि शिरसा देवं किं नो मृत्यु करिष्यति ॥५॥
अनन्तमव्यं शान्तमक्षमालाधरं हरम् ।
नमामि शिरसा देवं किं नो मृत्यु करिष्यति ॥६॥
भस्मोद्धूलित सर्वाङ्गं त्रिपुण्डाङ्कितमस्तकम् ।
नमामि शिरसा देवं किं नो मृत्यु करिष्यति ॥७॥
स्वर्गापवर्गदातारं सृष्टिस्थित्यन्तकारकम् ।
नमामि शिरसा देवं किं नो मृत्यु करिष्यति ॥८॥
आनन्दं परमानन्दं कैवल्यं पदगामिनम् ।
नमामि शिरसा देवं किं नो मृत्यु करिष्यति ॥९॥
त्रिनेत्रं पञ्चवक्त्रञ्च जटामुकुटमण्डितम् ।
नमामि शिरसा देवं किं नो मृत्यु करिष्यति ॥१०॥
प्रलयस्थितकर्त्तारं सृष्टिकर्त्तारमीश्वरम् ।
नमामि शिरसा देवं किं नो मृत्यु करिष्यति ॥११॥
गंगाधरं शशिधरं शंकरं शूलपाणिनम् ।
नमामि शिरसा देवं किं नो मृत्यु करिष्यति ॥१२॥
भस्माद्धूलित सर्वागं नागाभरण भूषितम् ।
नमामि शिरसा देवं किं नो मृत्यु करिष्यति ॥१३॥
मार्कण्डेयकृतं स्तोत्रं यः पठेच्छिवसन्निधौ ।
तस्य मृत्योर्भय नास्ति ह्यल्पमृत्योर्भयं कुतः ॥१४॥
मृत्युञ्जयाय रुद्राय नीलकण्ठाय शम्भवे ।
अमृतेशाय शर्वाय महादेवाय ते नमः ॥१५॥

*॥ शिवापर्णण मस्तु ॥*

## ॥ अथ महामृत्युञ्जय पुष्पाञ्जलिः ॥

जय वृषभध्वज हतमकरध्वज पुरमथन प्रमथाधिपते ।
जय जय देव त्रिजगन्नाथ त्रिशक्तिनाथ त्रिदश नमस्ते ॥
जय भूताधिप भूतविभूषित भूजगराजकृत भूषणभव्य ।
भव्यत भीमत्रिपुराधीश त्रिगुण त्र्यम्बक नाथ नमस्ते ॥
जय सपरंपदवचनागोचर वामदेव जयवर्धं नित्यम् ।
नित्याऽनित्य नरीहनिरञ्जन निर्विवाद निवर्ध नमस्ते ॥
जय तेजोमय निरुपम निर्भय महादेव कैलासनिवासिन् ।
कैलासप्रिय करुणासिन्धो पञ्चवदन परमेश नमस्ते ॥
जय जनमीप्रिय रविशशिलोचन लोकनाथ गिरिजेश गिरिश ।
गिरि राजेश्वर गिरिजाशरणप्रद शम्भो शूलिन् देव नमस्ते ॥
जयमृत्युञ्जय दक्षमखक्षय विष्णुविरञ्चि नमितपदपद्म ।
पद्मागार पदुंपदपारद पिनाकपाणिं प्रभुं नमस्ते ॥
जय सुन्दर जय सुखदमहानट महाकाल कालीहृदये ।
जय शशिशेखर सुरापगाधर सर्वगेह सर्वज्ञ नमस्ते ॥
जय जगनायक मङ्गलदायक मङ्गलेश चतुराननलक्ष्य ।
लक्ष्यालक्ष्यविपक्ष विनाशन विश्वम्भर विश्वेश नमस्ते ॥
दशकन्धर कृतमिति गिरिशस्तव मनुदिनं ममलमतिर्यः पठति ।
सुख मन भवति चिरं स महीपतिरिह चान्ते हरपुर निवसति ॥

*॥ इति श्रीदशकन्धर विरचितं महामृत्युञ्जय पुष्पाञ्जलिः ॥*

## ॥ अथ शनिमृत्युञ्जय स्तोत्रम् ॥

नीलाद्रि शोभांचित दिव्य मूर्तिः
खड्गी त्रिदण्डी शर चाप हस्तः ।
शम्भूर्महाकाल शनि पुरारि
र्जयत्यशेषासुर नाशकारी ॥
मेरुपृष्ठे समासीनं सामरस्ये स्थितं शिवम् ।
प्रणम्य शिरसा गौरी पृच्छतिस्म जगद्धितम् ॥

॥ पार्वत्युवाच ॥

भगवन्! देवदेवेश! भक्तानुग्रहकारक !
अल्पमृत्युविनाशाय यत्त्वया पूर्व सूचितम् ॥
तदेव त्वं महाबाहो! लोकानां हितकारकम् ।
तव मूर्ति प्रभेदस्य! महाकालस्य साम्प्रतम् ॥
शनैर्मृर्त्यंजयस्तोत्रं ब्रूहि मे नेत्रजन्मनः ।
अकाल - मृत्युहरणमपमृत्यु - निवारणम् ॥
शनिमन्त्रप्रभेदा ये तैर्युक्तं यत्स्तवं शुभम् ।
प्रतिनाम चतुर्थ्यन्तं नमोऽस्तु मनुनायुतम् ॥

॥ श्री ईश्वरोवाच ॥

नित्ये प्रियतमे गौरि सर्वलोकहितेरते ।
गुह्याद् गुह्यतमं दिव्यं सर्वलोकहितेरते ॥
शनि मृत्युंजयस्तोत्रं प्रवक्ष्यामि तवाऽधुना ।
सर्वमंगलमांगल्यं सर्वशत्रु विमर्दनम् ॥
सर्वरोगप्रशमनं सर्वापद्विनिवारणम् ।
शरीरारोग्य - करणमायुर्वृद्धिकरं नृणाम् ॥
यदि भक्तासि मे गौरि गोपनीयं प्रयत्नतः ।
गोपितं सर्वतंत्रेषु तच्छृणुष्व महेश्वरि ॥

विनियोग :- ॐ अस्य श्रीमहाकालशनिमृत्युञ्जयस्तोत्रमंत्रस्य पिप्पलाद ऋषिः, अनुष्टुप् छन्दः, महाकालशनिर्देवता, शां बीजं, आयसी शक्तिः,

कालपुरुषायेति कीलकं ममाऽकालमृत्युनिवारणार्थे जपे पाठे विनियोगः ।

ऋषिन्यासं करन्यासं देहन्यासं समाचरेत् ।
महोग्रं मूर्ध्नि विन्यस्य मुखे वैवस्वतं न्यसेत् ॥
हृदि न्यसेत् महाकालं गुह्ये कृशतनुं न्यसेत् ।
जान्वोस्तूरुचरं न्यस्य पादयोस्तु शनैश्चरम् ।
गले तु विन्यसेन्मन्दं बाह्वोर्महाग्रहं न्यसेत् ।
एवं न्यासविधिं कृत्वा पश्चात् कालात्मनः शनेः ॥
न्यासं ध्यानं प्रवक्ष्यामि ततो ध्यात्वा पठेन्नरः ।
कल्पादियुगभेदांश्च करांगन्यासरूपिणः ॥
कालात्मनो न्यसेद् गात्रे मृत्युंजय! नमोऽस्तु ते ।
मन्वन्तराणि सर्वांगे महाकालस्वरूपिणः ।
भावयेत्प्रति प्रत्यंगं महाकालस्य ते नमः ॥
भावयेत्प्रभवाद्यब्दान् शीर्षे कालजिते नमः ।
नमस्ते नित्यसेव्याय विन्यसेदयने भ्रुवोः ।
सौरये च नमस्तेऽस्तु गण्डयोर्विन्यसेत् ततः ॥
श्रावणं भावयेदक्ष्णो र्नमः कृष्णनिभाय च ।
महोग्राय नमोभाद्रं तथा श्रवणयोर्न्यसेत् ॥
नमो वै दुर्निरीक्ष्याय चाश्विनं विन्यसेन्मुखे ।
नमो नीलमयूखाय ग्रीवायां कार्तिकं न्यसेत् ॥
मार्गशीर्षं न्यसेद् बाह्वोर्महारौद्राय ते नमः ।
उद्ध्र्वलोकनिवासाय पौषं तु हृदये न्यसेत् ॥
नमः कालप्रबोधाय माघं वै चोदरेन्यसेत् ।
मन्दगाय नमो मेढ्रं न्यसेद्वै फाल्गुनं तथा ॥
ऊर्वोर्न्यसेच्चैत्रमासं नमः शिवोत्रृषाय च ।
वैशाखं विन्यसेज्जान्वोर्नमः संवर्त्तकाय च ॥
जंघयोर्भौ न्यसेज्ज्येष्ठं भैरवाय नमस्तथा ।
आषाढं पादयोश्चैव शनये च नमस्तथा ॥

कृष्णपक्षं च क्रूराय नमः आपाद मस्तके ।
न्यसेदाशीर्ष पादान्ते शुक्लपक्षं ग्रहाय च ॥
न्यसेन्मूलं पादयोश्च ग्रहाय शनये नमः ।
नमः सर्वजिते चैव तोयं सर्वांगुलौ न्यसेत् ॥
न्यसेद् गुल्फद्वये विश्वं नमः शुष्कतराय च ।
विष्णवयं भावयेज्जंघोभये शिष्टतमाय ते ॥
जानुद्वये धनिष्ठां च न्यसेत् कृष्णारुचे नमः ।
पूर्वाभाद्रं तथाग्रे च करालाय नमस्तथा ।
उरूद्वये च वरुणो न्यसेत् कालभृते नमः ।
पृष्ठेउत्तरभाद्रं च करालाय नमस्तथा ।
रेवतीं च न्यसेन्नाभौ नमो मन्दचराय च ।
गर्भदेशे न्यसेदाभो नमो श्यामतराय च ॥
नमो भोगिस्त्रजे नित्यं यमं स्तनयुगे न्यसेत् ।
न्यसेत्कृत्तिका हृदये नमस्तैलप्रियाय च ॥
रोहिणीं भावयेद्धस्ते नमस्ते खड्गधारिणे ।
मृगंन्यसेद्वामहस्ते त्रिदण्डोल्लासिताय च ।
दक्षोद्र्ध्वे भावयेद्रौद्रं नमो वै बाणधारिणे ॥
पुनर्वसुमूर्ध्वभागे नमो वै बाणधारिणे ।
तिष्यं न्यसेद्दक्षबाहौं नमस्ते हर मन्यवे ।
सार्पं न्यसेद्वामबाहौ चोग्रचापाय ते नमः ॥
मघां विभावयेत्कण्ठे नमस्ते भस्मधारिणे ।
मुखे न्यसेद्भगर्चं च नमः क्रूरग्रहाय च ॥
भावयेद्दक्षनासायामर्यमाणञ्च योगिने ।
भावेद्वामनासायां हस्तज्ञ धारिणे नमः ॥
त्वाष्ट्रं न्येसद्दक्षकर्णे नमोऽस्तु ब्राह्मणाय ते ।
स्वातिं न्यसेद् वामकर्णे नमो ब्रह्ममयाय च ।
विशाखां च दक्षनेत्रे नमस्ते ज्ञानदृष्टये ॥
अनुराधां गण्डे रक्ष महाकालाय ते नमः ।

ज्येष्ठां कपोलो रक्ष च पातु मृत्युञ्जयाय माम् ॥
विष्कुंभ भावयेच्छीर्षसन्धौ कालाय ते नमः ।
प्रीतियोगं भ्रुवोः संधौ महामन्द! नमोऽस्तुते ।
नेत्रयोः संधावायुष्मेऽधोगं भीष्माय ते नमः ॥
सौभाग्यं भावयेन्नासासन्धौ फलाशनाय च ।
शोभनं भावयेत्कर्णौ सन्धौ पुण्यात्मने नमः ।
नमः कृष्णायातिगण्डं हनुसन्धौ विभावयेत् ॥
नमो निर्मांसदेहाय सुकर्माणं शिरोधरे ।
धृतिं न्यसेद्देहवातौ पृष्ठे छायासुताय च ॥
तन्मूलसन्धौ शूलं च न्यसेदुग्राय ते नमः ।
तत्कर्पूरे न्यसद्गण्डे नित्यानन्दाय ते नमः ॥
वृद्धिं तन्मणिबन्धे च कालज्ञाय नमो न्यसेत् ।
ध्रुवं तदंगुलिमूलसंधौ कृष्णाय ते नमः ॥
व्याघातं भावयेद् बाहौ बाहुपृष्ठ कृशाय च ।
हर्षणं तन्मूलसन्धौ भूतसन्तापिने नमः ।
तत्कर्पूरे न्येसद्वज्रं सानन्दाय नमोऽस्तु ते ॥
सिद्धिं तन्मणिबन्धे च न्यसेत् कालाग्नये नमः ।
व्यतीपातं कराग्रेषु न्यसेत्कालकृते नमः ॥
वरीयानं दक्षपार्श्वसन्धौ कालात्मने नमः ।
परिघं भावयेद्वामपार्श्वसन्धौ नमोस्तु ते ॥
न्यसेद्दक्षोरुसन्धौ च शिवं वै कालसाक्षिणे ।
तज्जानौ भावयेत्सिद्धिं महादेहाय ते नमः ॥
साध्यं न्यसेच्च तद्गुल्फसन्धौ घोराय ते नमः ।
न्यसेत्तदंगुलीसन्धौ शुभं रौद्राय ते नमः ॥
न्यसेद्वामोरुसन्धौ च शुक्लकालविदे नमः ।
ब्रह्मयोगं च तज्जानौ न्यसेत्सद्योगिने नमः ॥
ऐन्द्रं तद्गुल्फसन्धौ च योगोधीशाय ते नमः ।
न्यसेत्तदंगुलीसन्धौ नमो भव्याय वैधृतिम् ॥

चर्मणि बवकरणं च भावयेद्यज्यने नमः ।
वालवं भावयेद्रक्ते नमो भव्याय वैधृतिः ॥
कौलवं भावयेदस्थि नमस्ते सर्वभक्षिणे ।
तैतिलं भावयेन्मांसे आममांसप्रियाय ते ॥
गरं न्यसेद्वसायां च सर्वग्रासाय ते नमः ।
न्यसेद्वणिज्यं मज्जायां सर्वान्तक नमोऽस्तुते ॥
वीर्ये च भावयेद्विष्टिं नमो मन्यूग्रतेजसे ।
रुद्रमित्रं पितृवसुवारीयेतांश्च पश्च च ॥
मुहूर्तांश्च दक्षपादनखेषु भावयेन्नमः ।
पुरूहूर्त्तांश्च वामपादनखेषु भावयेन्नमः ॥
सत्यव्रताय सत्याय नित्यसत्याय ते नमः ।
सिद्धेश्वर! नमस्तुभ्यं योगेश्वर! नमोऽस्तुते ॥
वह्निघनक्तंचरांश्चैव वरुणार्यमयोनिकान् ।
मुहूर्तांश्च दक्षहस्तनखेषु भावयेन्नमः ॥
लग्नोदयाय दीर्घाय मार्गिणे दक्षदृष्टये ।
वक्राय चातिक्रूराय नमस्ते वामदृष्टये ॥
वामहस्तनखेष्वन्तर्यवर्णेशाय ते नमः ।
गिरिशाहिर्बुध्न्यपूषाजपष्च्छस्त्रांश्च भावयेत् ॥
राशिभोक्त्रे राशिगाय राशिभ्रमणकारिणे ।
राशिनाथाय राशीनां फलदात्रे नमोऽस्तुते ॥
यमाग्निचन्द्रादितिकविधातृंश्च विभायेत् ।
ऊर्ध्वहस्तदक्षनखेष्वन्यत्कालाय ते नमः ॥
तुलोच्चस्थाय सौम्याय नक्रकुम्भगृहाय च ।
समीरत्वष्टजीवांश विष्णु तिग्मद्युतिन्न्यसेत् ॥
ऊर्ध्ववामहस्तेष्वन्यग्रह दोष निवारणे ।
तुष्टाय च वरिष्ठाय नमो राहुसखाय च ॥
रविवारं ललाटे च न्यसेद्भीमदृशे नमः ।

सोमवारं न्यसेत्वान्त्रे नमो जीवस्वरूपिणे ॥
भौमवारं न्यसेत् व्रान्ते नमो मृतप्रियाय च ।
मेढ्रे न्यसेत्सौम्यवारं नमो जीवस्वरूपिणे ॥
वृषणे गुरुवारे च नमो मंत्रस्वरूपिणे ।
भृगुवारं मलद्वारे नमः प्रलयकारिणे ॥
पादयोः शनिवारं च निर्मांसाय नमोऽस्तुते ।
घटिकां न्यसेत्केशेषु नमस्ते सूक्ष्मरूपिणे ॥
कालरूपिन्नमस्तेऽस्तु सर्वपापप्रणाशक ।
त्रिपुरस्य वधार्थाय शम्भू जाताय ते नमः ॥
नमः कालशरीराय कालनेत्राय ते नमः ।
कालहेतो! नमस्तुभ्यं कालात्मजाय ते नमः ॥
अखण्डदण्डमानाय त्वनाद्यन्ताय वै नमः ।
कालदेवाय कालाय कालकालाय ते नमः ॥
निमेषादिमहाकल्पकालरूपं च भैरवम् ।
मृत्युंजयं महाकालं नमस्यामि शनैश्चरम् ॥
दातारं सर्वभव्यानां भक्तानामभयंकरम् ।
मृत्युंजयं महाकालं नमस्यामि शनैश्चरम् ॥
कर्त्तारं सर्वदुःखानां दुष्टानां भयवर्धनम् ।
मृत्युंजयं महाकालं नमस्यामि शनैश्चरम् ॥
हर्त्तारं ग्रहजातानां फलानामधिकारिणाम् ।
मृत्युंजयं महाकालं नमस्यामि शनैश्चरम् ॥
सर्वेषामेव भूतानां सुखदं शान्तिमव्ययम् ।
मृत्युंजयं महाकालं नमस्यामि शनैश्चरम् ॥
कारणं सुखदुःखानां भावाऽभावस्वरूपिणम् ।
मृत्यञ्जयं महाकालं नमस्यामि शनैश्चरम् ॥
अकालमृत्युहारिणमपमृत्यु निवारणम् ।
मृत्युंजयं महाकालं नमस्यामि शनैश्चरम् ॥

कालरूपेण संसारं भक्षयन्तं महाग्रहम् ।
मृत्युंजयं महाकालं नमस्यामि शनैश्चरम् ॥
दुर्निरीक्ष्यं स्थूल रोमं भीषणं दीर्घलोचनम् ।
मृत्युंजयं महाकालं नमस्यामि शनैश्चरम् ॥
ग्रहाणां ग्रहभूतं च सर्वग्रह निवारणम् ।
मृत्युंजयं महाकालं नमस्यामि शनैश्चरम् ॥
कालस्य वशगाः सर्वे न कालः कस्यचिद्वशः ।
तस्मात्त्वां कालपुरुषं प्रणतोऽस्मि शनैश्चरम् ।
कालादेव जगत्सर्वं काले एवं विलीयते ।
कालरूपः स्वयं शम्भूः कालात्मा ग्रह देवता ॥
चण्डीशो रुद्रडाकिन्याक्रान्त चण्डीश उच्यते ।
विद्युदाकलितो नद्यां समारूढो रसाधिपः ॥
चण्डीशः शुकसंयुक्तो जिह्वया ललित पुनः ।
चित्तजस्तामसी शोभी स्थिरात्मा विद्युतायुतः ॥
नमोऽन्तो मनुरित्येष शनितुष्टिकरः शिवे ।
आद्यन्तेऽष्टोत्तरशतं मनुमेन जपेन्नरः ॥
यः पठेच्छृणुयाद्वापि ध्यात्त्वा सम्पूज्य भक्तितः ।
तस्य मृत्युर्भयं नैव शतवर्षावधिप्रिये ॥
ज्वराः सर्वे विनश्यंति दद्रु-विस्फोटकाच्छुभा ।
दिवा सौरिं स्मरेत् रात्रौ महाकालं यजन् पठेत् ॥
जन्मर्क्षे च यदा सौरिर्जपेदेतत्सहस्रकम् ।
वेधगे वामवेधे वा जपेद्वर्षसहस्रकम् ॥
द्वितीये द्वादशे मन्दे तनौ वा चाष्टगेऽपि वा ।
तत्तद्राशौ भवेद्यावत् पठेत्तावद्दिनावधि ॥
चतुर्थे दशमे वाऽपि सप्तमे नवपञ्चमे ।
गोचरे जन्मलग्नेशो दशास्वन्तर्दशासु च ॥
गुरुलाघवज्ञानेन पठेत्तावद्दिनावधि ।
शतमेकं त्रयं वाऽयं शतयुग्मं कदाचन ॥

आपदस्तस्य नश्यन्ति पापानि न जयं भवेत् ।
महाकालालये पीठे ह्यथवा जलसन्निधौ ॥
पुण्यक्षेत्रेऽश्वत्थमूले तैलकुम्भाग्रतो ग्रहे ।
नियमेवैकमत्तेन ब्रह्मचर्येण मौनिना ॥
श्रौतव्यं पठितव्यं च साधकानां सुखावहम् ।
परं स्वस्त्ययनं पुण्यं स्तोत्रं मृत्युञ्जयाभिधम् ॥
कालक्रमेण कथितं न्यासक्रम समन्वितम् ।
प्रातःकाले शुचिर्भूत्वा पूजायां च निशामुखे ॥
पठतां नैव दुष्टेभ्यो व्याघ्रसर्पादितो भयम् ।
नाग्नितो न जलाद्वायोर्देशे देशान्तरेऽथवा ॥
नाऽकाले मरणं तेषां नाऽपमृत्युभयं भवेत् ।
आयुर्वर्षशतं साग्रं भवन्ति चिरजीविनः ॥
नाऽतः परतरं स्तोत्रं शनितुष्टिकरं महत् ।
शान्तिकं शीघ्रशाफल्यं स्तोत्रमेतन्मयोदितम् ॥
तस्मात्सर्वप्रयत्नेन यदीच्छेदात्मनो हितम् ।
कथनीयं महादेवि! नैवाभक्तस्य कस्यवित् ॥

*॥ इति मार्तण्डभैरव तंत्रे शनिमृत्युञ्जय स्तोत्रम् ॥*

## ॥ अथ शिवाथर्वशीर्षम् ॥

(शिवोपनिषद)

ॐ देवाह वै स्वर्गलोकमयंस्ते रुद्रमपृच्छन्। को भवानिति। सोऽब्रवी-दहमेकः प्रथममासीद्वर्तासि च भविष्यामि च नान्यः कश्चिन्मत्तो व्यतिरिक्त इति। सोऽन्तरादन्तरं प्राविश दिशश्चान्तरं प्राविशत्सोहं नित्यानित्यो व्यक्ता व्यक्तो ब्रह्माब्रह्माहं प्राञ्चः प्रत्यञ्चोऽहं दक्षिणाञ्च उदञ्चोहमधश्चोर्ध्वश्चाहं दिशश्च प्रतिदिशश्चाहं पुमानपुमान् स्त्रियश्चाहं सावित्र्यहं गायत्र्यहं त्रिष्टुब्जगत्यनुष्टुप् चाहं छंदोऽहं सत्योहं गार्हपत्यो दक्षिणाग्निरा हवनीयोऽहं गौरहं गौर्यह मृगहं यजुरहं सामाहमथर्वाऽङ्गिरसोऽहं ज्येष्ठोहं श्रेष्ठोहं वरिष्ठोहमापेहं तेजोहं गुह्योऽहमरण्योहं अक्षरमहंक्षरमहं पुष्करमहंपवित्र महमुग्रञ्च वलिश्च पुरस्ता ज्जोतिरित्यहमेव

सर्वेभ्यो मामेव स सर्वः समायोमां वेदस देवान् वेद सर्वाश्च वेदान साङ्गानपि ब्रह्मब्रह्माण-ै श्चगांगोभि ब्र्राह्मणेन हविर्हविषा आयुरायुषासत्त्यं सत्येन धर्मेण धर्म तर्पयामिस्वेन तेजसा। ततोह वै ते देवा रुद्रमपृच्छन्। ते देवा रुद्रमपश्यन् ते देवा रुद्रमध्यायन् ते देवा उर्ध्वबाहवो रुद्रस्तुवन्ति।

ॐ यो वै रुद्रः सभगवान् यश्च ब्रह्मा तस्मै वै नमो नमः ॥१॥
यो वै रुद्रः सभगवान् यश्च विष्णुस्तस्मै वै नमो नमः ॥२॥
यो वै रुद्रः सभगवान् यश्च स्कंदस्तस्मै वै नमो नमः ॥३॥
यो वै रुद्रः सभगवान् यश्चेन्द्रस्तस्मै वै नमो नमः ॥४॥
यो वै रुद्रः सभगवान्यश्चाग्निस्तस्मै वै नमो नमः ॥५॥
यो वै रुद्रः सभगवान् यश्चवायु स्तस्मै वै नमो नमः ॥६॥
यो वै रुद्रः सभगवान् यश्च सूर्यस्तस्मै वै नमो नमः ॥७॥
यो वै रुद्रः सभगवान् यश्च सोमस्तस्मै वै नमो नमः ॥८॥
यो वै रुद्रः सभगवान् येऽष्टौग्रहास्तस्मै वै नमो नमः ॥९॥
यो वै रुद्रः सभगवान् येचाष्टौ प्रतिग्रहास्तस्मै वै नमो नमः ॥१०॥
यो वै रुद्रः सभगवान् यच्च भूस्तस्मै वै नमो नमः ॥११॥
यो वै रुद्रः सभगवान् यच्च भुवस्तस्मै वै नमो नमः ॥१२॥
यो वै रुद्रः सभगवान् यच्च स्वस्तस्मै वै नमो नमः ॥१३॥
यो वै रुद्रः सभगवान् यच्च महस्तस्मै वै नमो नमः ॥१४॥
यो वै रुद्रः सभगवान् या च पृथिवी तस्मै वै नमो नमः ॥१५॥
यो वै रुद्रः सभगवान् यच्चान्तरिक्षं तस्मै वै नमो नमः ॥१६॥
यो वै रुद्रः सभगवान् या च द्यौस्तस्मै वै नमो नमः ॥१७॥
यो वै रुद्रः सभगवान् याश्चापस्तस्मै वै नमो नमः ॥१८॥
यो वै रुद्रः सभगवान् यच्च तेजस्तस्मै वै नमो नमः ॥१९॥
यो वै रुद्रः सभगवान् यश्चकालस्तस्मै वै नमो नमः ॥२०॥
यो वै रुद्रः सभगवान् यश्चयमस्तस्मै वै नमो नमः ॥२१॥
यो वै रुद्रः सभगवान् यश्चमृत्युस्तस्मै वै नमो नमः ॥२२॥
यो वै रुद्रः सभगवान् यच्चाऽमृतं तस्मै वै नमो नमः ॥२३॥
यो वै रुद्रः सभगवान् याच्चाकाशं तस्मै वै नमो नमः ॥२४॥
यो वै रुद्रः सभगवान् यच्चविश्वं तस्मै वै नमो नमः ॥२५॥

यो वै रुद्रः सभगवान् यच्च स्थूलं तस्मै वै नमो नमः ॥२६॥
यो वै रुद्रः सभगवान् यच्च सूक्ष्मं तस्मै वै नमो नमः ॥२७॥
यो वै रुद्रः सभगवान् यच्च शुक्लं तस्मै वै नमो नमः ॥२८॥
यो वै रुद्रः सभगवान् यच्च कृष्णस्तस्मै वै नमो नमः ॥२९॥
यो वै रुद्रः सभगवान् यच्च कृत्स्नं तस्मै वै नमो नमः ॥३०॥
यो वै रुद्रः सभगवान् यच्च सत्यं तस्मै वै नमो नमः ॥३१॥
यो वै रुद्रः सभगवान् यच्च सर्वत तस्मै वै नमो नमः ॥३२॥

भूस्ते आदिर्मध्य भुवस्ते स्वस्वते शीर्षं विश्वरूपोसि ब्रह्मैकस्त्वं द्विधा त्रिधा वृद्धिस्त्वं शांतिस्त्वं पुष्टिस्त्वं हुतमहुतं दत्तमदत्तं सर्वमसर्वं विश्वमविश्वं कृतमकृतं परामपरं परायणञ्चत्वं अपामसोममृता अभूमागन्मे ज्योतिरविदाम देवान्। किं नूनमस्मान् कृणवदराति। किमुधूर्त्तिरमृतं मर्त्यस्य सोम सूर्यपुरस्तात्सूक्ष्मः पुरुषः। सर्वज्ञगद्धितं वा एतदक्षरं प्राजापत्यं सौम्यं सूक्ष्मं पुरुषं ग्राह्यमग्राह्येण भावं भावेन सौम्यं सौम्येन सूक्ष्मं सूक्ष्मेण वायव्यं वायव्येन ग्रसतिस्तस्मै महाग्रासाय वै नमो नमः। हृदिस्था देवताः सर्वा हृदि प्राणाः प्रतिष्ठिताः। हृदि त्वमसि यो नित्यं तिस्रो मात्राः परस्तुसः। तस्योत्तरतः शिरो दक्षिणतः पादौ यं उत्तरतः स ओङ्कारः य ओङ्कारः स प्रणवः यः प्रणवः स सर्वव्यापी यः सर्वव्यापी सोऽन्ततः योऽनन्तस्तत्तारंतच्छुक्लं यच्छुक्लं तत्सूक्ष्मं यत्सूक्ष्मं तद्वैद्युतं तत्परं ब्रह्म। यत् परं ब्रह्म स एकः य एकः स रुद्रः यो रुद्रः स ईशान य ईशानः स भगवान् महेश्वरः ॥३॥

अथ कस्मादुच्यते ओंकारः यस्मादुच्चार्यमाण एव प्राणानूर्ध्व मुत्क्रामयति तस्मादुच्यते ओङ्कारः।

अथ कस्मादुच्यते प्रणवः यस्मादुच्चार्यमाण एव ऋग्यजुः सामाथर्वाङ्गिरसं ब्रह्मब्राह्मणेभ्यः प्रणामयति च नामयति तस्मादुच्यते प्रणवः। अथ कस्मादुच्यते सर्वव्यापी यस्मादुच्चार्यमाण एव यथास्नेहेन पलालपिण्डमिव शान्तरूपमोतप्रोतमनुप्राप्तो व्यतिषक्तश्च तस्मादुच्यते सर्वव्यापी। अथ कस्मादुच्यते ऽनन्तः यस्मादुच्चार्यमाण एव तिर्यगमूर्ध्वमधस्ताच्चास्यान्तो नोपलभ्यते तस्मादुच्चयते ऽनन्तः। अथ कस्मादुच्यते तारं यस्मादुच्चार्यमाण एव गर्भजन्म व्याधिजरा मरण संसार महाभत्तारयति त्रायते च तस्मादुच्ये तारम्। अथ कस्मादुच्यते शुक्लं यस्मादुच्चार्यमाण एव क्रंदते क्लामयति च तस्मादुच्यते शुक्लम्। अथ कस्मादुच्यते सूक्ष्मं यस्मादुच्चार्यमाण एव सूक्ष्मोभूत्वा

शरीराण्यधितिष्ठति सर्वाणि चाङ्गान्यभिमृश्यतितस्मादुच्यते सूक्ष्मम्।

अथ कस्मादुच्यते वैद्युतं यस्मादुच्चार्यमाण एव व्यक्तेमहति तपसि द्योतयति तस्मादुच्यते वैद्युतं। अथ कस्मादुच्यते परं ब्रह्म यस्मात्परमपरं परायणञ्च बृहद् बृहत्याबृंहयति यस्मादुच्यते परं ब्रह्म। अथ कस्मादुच्यते एकः यः सर्वान् प्राणान् संभक्ष्य संभक्षणेनाजः संसृजति तीर्थमेके व्रजन्ति तीर्थमेके दक्षिणः प्रत्यञ्च उदञ्च प्राच्यो ऽभि व्रजन्त्येके तेषां सर्वेषामिह सङ्गतिः साकं स एको ऽभूदन्तश्चरति प्रजानां तस्मादुच्यते एकः। अथ कस्मादुच्यते रुद्रः यस्मादृषिभिर्नान्यै र्भवतैर्द्रुतमस्य रूपमुपलभ्यते तस्मादुच्यमे रुद्रः। अथ कस्मादुच्यते ईशानः यः सर्वान्देवानीशते ईशानीभिर्जनीभिश्च शक्तिभिः। अभित्वा शूरणोनुमो दुग्धा इव धेनवः। ईशानमस्य जगतः स्वदर्शमीशानमिन्द्र तस्थुष इति तस्मादुच्यते ईशानः। अथ कस्मादुच्यते भगवान महेश्वरः यस्माद्भक्ता ज्ञानेन भजत्यनु गृह्णाति च वाचं संसृजति विसंसृजीत च सर्वान् भावान् परित्यज्यात्म ज्ञानेन योगैश्वर्येण महति महीयते तस्मादुच्यते स भगवान् महेश्वरः तदेतद्रुद्र चरितम् ॥४॥

एषोहदेवः प्रदिशो ऽनु सर्वाः पूर्वोहजातः स उ गर्भे अन्तः। स एव जातः स जनिष्यमाणः प्रत्यङ् जनांस्तिष्ठति सर्वतोमुखः। एकोरुद्र न द्वितीया य तस्मै य इमाँ लोकानीशत ईशानीभिः। प्रत्यङ् जनस्तिष्ठति चान्तकाले संसृज्य विश्वाभुवनानि गोप्ता। यो योनिं योनिमधितिष्ठकोयेनेदं सर्वं विचरति सर्वम्। तमीशानं वरदं देवमीड्यं निचाय्येमां शांतिमत्यन्तमेति।

क्षमां हित्वा हेतुजालस्यमूलं बुद्ध्या संचितं स्थापयित्वा तु रुद्रे। रुद्रमेकत्वमाहुः शाश्वतं वै पुराणमिषमूर्जेण पशवोनानु मायन्तंमृत्यु पाशान् तदेतेनात्मन्नेतेनार्ध च चतुर्थेन मात्रेण शांतिं संसृजति। पशुपाश विमोक्षणं या सा प्रथमा मात्रा ब्रह्मदेवत्या रक्तावर्णेन यस्तांध्यायते नित्यं सगच्छेत् ब्रह्मपदम्। या सा द्वितीया मात्रा विष्णुदेवत्या कृष्णवर्णेन यस्तां ध्यायते नित्यं स गच्छेद्वैष्णवं पदम्। या सा तृतीयामात्रा ईशान देवत्या कपिलावर्णेन यस्तां ध्यायते नित्यं स गच्छेदीशानं पदम्। या साऽर्धचतुर्थी मात्रा सर्व देवत्याऽव्यक्तीभूता खं विचरति शुद्धा स्फटिकसन्निभावर्णेन यस्तां ध्यायते नित्यं स गच्छेत्पदमनामयम्। तदेतदुपासित मुनयो वाग्वदन्ति न तस्य ग्रहणमयं पंथाविहित उत्तरेण येन देवायन्ति येन पितरो येन ऋषयः परमपरंपरायणं चेति। ब्रालाग्रमात्रं हृदयस्य मध्ये विश्वेदेवं जातरूपं वरेण्यम्। तमात्मस्थं येतु पश्यन्ति धीरा स्तेषां शांतिर्भवति नोत्तरेषाम्।

यस्मिन् क्रोधयाञ्च तृष्णां क्षमाञ्चाक्षमां हित्वा हेतु जालस्य मूलं बुद्ध्या सञ्चितं स्थापयित्वातुरुद्रे रुद्र मेकत्वमाहुः रुद्रोहि शाश्वतेन वै पुराणे नेष मूर्जेण तपसा नियन्ताग्निरिति भस्म वायुरिति भस्म जलमिति कोमेति भस्म भस्म सर्व ७७ हवा इदं भस्म मन एतानि चक्षुंषि यस्मादव्रतमिदं पाशुपतं यद्भस्मनाङ्गानि संस्पृशेत् तस्माद् ब्रह्म तदेतत्पाशुपतं पशुपाश विमोक्षणाय ॥५॥

योऽग्नौ रुद्रो यो ऽप्सन्तर्य ओषधी र्वीरुधआ विवेश य इमाविश्वा भुवनानि च क्लृपे तस्मै रुद्राय नमो ऽस्त्वग्नये। यो रुद्रो ऽप्सु यो रुद्रोऽग्नौ यो रूद्रोऽपवन्तर्यो रुद्र ओषधी र्विरुध आविवेश। यो रुद्र इमा विश्वाभुवनानि क्लृपे तस्मै रुद्राय वै नमो नमः। यो रुद्रोप्सु यो रुद्रो ओषधीषु यो रुद्रो वनस्पतिषु येन रुद्रेण जगदूर्ध्व धारितं पृथिवी द्विधात्रिधाधर्त्ताधारिता नागायेन्तरिक्षे तस्मै रुद्राय वै नमः। मूर्धानमस्य संसेव्याप्यथर्वा हृदयञ्चयत्। मस्तिष्कादूर्ध्वं प्रेरयत्यवमानो ऽधिशीर्षतः। तद्वाअथर्वणः शिरोदेवकोशः समुज्झितः तत् प्राणोऽभिरक्षति शिरोऽन्तमथोमनः न च दिवो देवजनेनगुप्ता न चान्तरिक्षाणि न च भूम इमाः। यस्मिन्निदं सर्वमोतप्रोतं तस्मादन्यन्नपरं किञ्चनास्ति। न तस्मात्पूर्वं न परं तदस्ति न भूतं नोतभव्यं यदासीत्। सहस्त्रपादेक मूर्ध्वाव्याप्तं स एवेदमावरीवर्तिभूतम्। अक्षरात् सञ्जायते कालः कालाद व्यापक उच्यते। व्यापकोहि भगवान् रुद्रो भोगायमानो यदाशेते रुद्रस्तदा संहार्यते प्रजाः उच्छवसिते तमो भवति तमस आपो ऽश्वङ्गुल्यामथिते मथितं शिशिरे शिशिरं मथ्यमानं फेनं भवति फेनादण्डं भवत्यण्डाद् ब्रह्मा भवति ब्रह्मणो वायुः वायोरोङ्कार ओङ्कारात् सावित्री सावित्र्या गायत्री गायत्र्या लोका भवन्ति अर्चयति तपः सत्यं मक्षरक्षन्ति यद्ध्रुवम्। एतद्धि परमंतपः। आपोज्योति रसोमृतं ब्रह्म भू र्भुवः स्वरोन्नमः इति ॥६॥ य इदमथर्व शिरो ब्राह्मणोऽधीते। अश्रोत्रियः श्रोत्रियो भवति। अनुपनीत उपनीतो भवति। सोऽग्निपूतो भवति। स वायुपूतो भवति। स सूर्यपूतो भवति। स सोमपूतोभवति। स सत्यपूतोभवति। स सर्वैर्देवैर्ज्ञातो भवति। स सर्वैवेदैरनु ध्यातो भवति। स सर्वेषु तीर्थेषु स्नातो भवति। तेन सर्वैः क्रतुभिरिष्टं भवति। गायत्र्याः षष्टि सहस्त्राणि जप्तानि भवन्ति। प्रणवानामयुतं जप्तं भवति। स चक्षुषः पंक्ति पुनाति। आसप्तमात् पुरुषगान्पुनातीत्याह भगवानथर्वशिरः सकृज्जप्तवै व शुचिः स पूतः कर्मण्यो भवति। द्वितीयं जप्त्वा गणाधिपत्यमाप्नोति। तृतीयं जप्त्वैवमेवान् प्रविशन्त्यो सत्यमों सत्यमों सत्यम्।

*॥ इत्यथर्ववेदे शिवाथर्वशीर्षम्। इति शिवउपनिषत् ॥*

# ॥ अथ कालाग्नि रुद्रोपनिषद् ॥

भस्म धारण हेतु यह प्रयोग सभी पापों का नाश करता है।

विनियोग - ॐ प्राणानाचम्य संकल्प्य आत्मनौ भावशुद्ध्यर्थे विभूतिधारणमहं करिष्ये।

॥ ध्यानम् ॥

शुद्धस्फटिक संकाशमेकवक्त्रं चतुर्भुजम् ।
मृगटंकधरां देवीं वरदाभय शोभिनीम् ॥
सर्वकामप्रशमनीं सर्वोपद्रव नाशिनीम् ।
सदा शिवसखीं साध्वीं निगमान्तार्विहारिणीम् ॥
ध्यात्वा चैव चिताभूतिं धारयेत् पुलकांगिभिः ॥

विनियोग - ॐ पृथ्वीति मन्त्रस्य मेरुपृष्ठऋषिः, सुतलं छन्दः, कूर्मो देवता, आसने विनियोगः।

॥ ध्यानम् ॥

ॐ पृथ्वी त्वया धृता लोका देवी त्वं विष्णुना धृता ।
त्वं च धारय मां देवि पवित्रं कुरुचासनम् ॥

न्यासः - ॐ आधारशक्त्यै नमः। ॐ अंगुष्ठाग्रे तु गोविन्दः। ॐ तर्जन्यां तु महीधरः। ॐ मध्यमायां हृषीकेशः। ॐ अनामिकायां त्रिविक्रमः। ॐ कनिष्ठिकायां विष्णु। ॐ करमध्ये तुमाधवः। करपृष्ठे जनार्दनः। ॐ अकारो नाभौ। ॐ उकारः हृदये। ॐ मकारः मूर्ध्नि। ॐ भूः पादौ। ॐ भुवः जान्वोः। ॐ स्वः गुह्ये। ॐ महः नाभौ। ॐ जनः हृदये। ॐ तपः कण्ठे। ॐ सत्यं ललाटे। ॐ भूः हृदयाय नमः। ॐ भुवः शिरसे स्वाहा। ॐ स्वः शिखायै वषट्। ॐ तत्सवितुर्वरेण्यमिति कवचाय हुं। ॐ भर्गोदेवस्य धीमहि नेत्रत्रयाय वौषट्। ॐ धियो योनः प्रचोदयात् अस्त्राय फट्।

विनियोग - ॐ प्रणवस्य ब्रह्मऋषिर्देवी गायत्रीछन्दः, परमात्मा देवता, अं बीजं, उं शक्तिः, मं कीलकं विन्दुनादेति त्रिप्रकारं ज्योतिर्ममात्मनः सर्वकर्मारम्भे प्राणायामे जपे विनियोगः।

| मन्त्र | करन्यास | हृदयादिन्यास |
|---|---|---|
| ॐ ईशानाय | अङ्गुष्ठाभ्यां नमः। | हृदयाय नमः। |
| ॐ तत्पुरुषाय | तर्जनीभ्यां नमः। | शिरसे स्वाहा। |
| ॐ अघोराय | मध्यमाभ्यां नमः। | शिखायै वषट्। |
| ॐ वामदेवाय | अनामिकाभ्यां नमः। | कवचाय हुम्। |
| ॐ सद्योजाताय | कनिष्ठिकाभ्यां नमः। | नेत्रत्रयाय वौषट्। |
| ॐ श्रीकालाग्निरुद्राय | करतलकरपृष्ठाभ्यां। | अस्त्राय फट्। |

**विनियोगः – ॐ भूर्भुवः स्वः भस्मनः पिप्लादिऋषिः, जगतीछन्दः, ॐ श्रीकालाग्रिरुद्रो देवता, भस्मधारणे जपे विनियोगः।**

॥ ध्यानम् ॥

**त्रिनेत्रं त्रिशिरं रौद्रं त्रिहस्तं गुणवक्त्रकम्।**
**त्रिपादं वह्निनयनं भस्मकुण्डेति विग्रहम्॥**
**ताण्डवाडम्बरं भीमं रक्तपुष्पोपशोभितम्।**
**रक्षामन्त्रेश्वरं देवं ध्यात्वा शान्तिं लभेन्नरः॥**

एवं ध्यात्वा विशेषेण भस्मनो धारणं कुरु।

**ॐ श्रीनन्दिकेश्वराय नमः। ॐ वन्दितां श्रीसुरेन्द्रेण ब्रह्मणा शंकरेण च। अतस्त्वां पाहि नो देवि विभूतिर्भूतिदा भवेत्॥**

**ॐ अग्निरिति भस्म। ॐ जलमिति भस्म। ॐ स्थलमिति भस्म। ॐ वायुरिति भस्म। ॐ व्योमेति भस्म।**

इन मन्त्रों से भस्म में जल डालकर मिलायें।

**मनः सहितानि दशेन्द्रिययाणि भस्मानि सर्वाणि हव्याय नमः।**

**ॐ ईशानाय नमः। ॐ तत्पुरुषाय नमः। ॐ अघोराय नमः। ॐ वामदेवाय नमः। ॐ सर्वत्रसद्योजाताय नमः।**

**विभूति मन्त्रा – ॐ भूर्भुवः स्वः सोहं सद्योजातस्य। ॐ भ्रें भ्रें भ्रें भस्मांग सर्वाङ्गेश्वरिमयि हुं फट् स्वाहा।**

**ॐ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्।**
**ॐ ऊर्वारुकमिव बन्धनान् मृत्योर्मुक्षिय मामृतात्॥**

ॐ नमः शिवाय। मन्त्र से भस्म को कर पुटित करके अभिमन्त्रित करें।

करसम्पुटं कृत्वा इत्यभिमन्त्र किञ्चिद् गृहीत्वा आपोहिष्ठेत्यापः सम्प्रोक्ष्य वामहस्तेन त्रिकोणमालिख्य षट्कोणं च तन्मध्ये बीजाक्षराणि लिखित्वा द्वादशवारं चाभिमन्त्र्य किञ्चिद् भूमौ विसृज्य। अथाम्बुना भस्मलोड्य दीप्तचण्डाय नमः। अंगुष्ठेन शिरसि प्रदक्षिणीकृत्य। ॐ नमो भगवते ब्रह्मणे नमः।

॥ पञ्चब्रह्मश्रुतिः॥

विनियोगः - ॐ ईशानमन्त्रस्य ईशानरुद्रो देवता, दुर्वासा ऋषिः, अनुष्टुप्छन्दः, ईशान प्रसादसिद्ध्यर्थे जपे विनियोगः।

ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोधिपतिः ब्रह्मा शिवो मेऽस्तु सदाशिव इति शिरसि।

विनियोग - ॐ तत्पुरुष मन्त्रस्य तत्पुरुषरुद्रो देवता, दधिचिऋषिर्देवी, गायत्रीछन्दः, तत्पुरुषप्रसादसिद्ध्यर्थे जपे विनियोगः।

विनियोग - ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नो रुद्रः प्रयोदयात्। इति मध्यमुखे।

विनियोग - ॐ अघोरमन्त्रस्य अघोरऋषिः अघोररुद्रो देवता अनुष्टुप् छन्दः अघोर प्रसाद सिद्ध्यर्थ जपे विनियोगः।

ॐ घोर घोर महाघोर वज्रघोर प्राणघोर शिवघोर हुं फट् स्वाहा। ॐ अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः। सर्वेभ्यः सर्वसर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः। इति दक्षिणमुखे।

विनियोग - ॐ वामदेव मन्त्रस्य वामदेवऋषिः, वामदेवरुद्रो देवता, त्रिष्टुप्छन्दः, वामदेवप्रसाद सिद्ध्यर्थे जपे विनियोगः।

ॐ वामदेवाय नमः। ॐ ज्येष्ठाय नमः। ॐ श्रेष्ठाय नमः। ॐ रुद्राय नमः। ॐ कालाय नमः। ॐ कलविकरणाय नमः। ॐ बलाय नमः। ॐ बलप्रमथनाय नमः। ॐ सर्वभूतदमनाय नमः। ॐ मनोन्मनाय नमः। इति पश्चिम मुखे।

विनियोग - ॐ सद्योजात मन्त्रस्य सद्योजातऋषिः, सद्योजातरुद्रो देवता, जगतीछन्दः, सद्योजातप्रसाद सिद्ध्यर्थे जपे विनियोगः।

ॐ सद्योजातं प्रपद्यामि वै नमः भवे भवे नातिभवे भवस्य मां भवोद्भवाय

नमः। इति उत्तरमुखे।

अथवान्तरे सद्योजातमित्यर्थः। वामदेवाय नमः हृदये। अघोराय नमः नाभौ। तत्पुरुषाय नमः पादयोः। ईशानाय नमः शिरसि। एतानि तानि शिव मन्त्र पवित्राणि भस्मानि कामदहनांगभूषितानि। त्रिः पुण्ड्रकानि रचिता ललाटपटले पीतानि दैवलिखितानि द्विरक्षराणि ह्रीं ह्रीं व्यापकं च।

इन मन्त्रों से अङ्गों पर भस्म धारण करें। त्रिपुण्ड लगायें। ह्रीं ह्रीं से व्यापक न्यास करें।

श्रीकरं च पवित्रं च रोगदोष विनाशनम्।
लोके वशिकरं पुण्यं भस्मत्रैलोक्यपावनम्॥

ॐ ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः हव्यवाहनाय नमः। पुन रपि न्यासो विधीयते।

करन्यास – ॐ ह्रां अंगुष्ठाभ्यां नमः। ॐ ह्रीं तर्जनीभ्यां नमः। ॐ ह्रूं मध्यमाभ्यां नमः। ॐ ह्रैं अनामिकाभ्यां नमः। ॐ ह्रौं कनिष्ठिकाभ्यां नमः। ॐ ह्रः करतल करपृष्ठाभ्यां नमः।

हृदयादिन्यास – ॐ ह्रां हृदयाय नमः। ॐ ह्रीं शिरसे स्वाहा। ह्रूं शिखायै वषट्। ॐ ह्रैं कवचाय हुम्। ॐ ह्रौं नेत्रत्रयाय वौषट्। ॐ ह्रः अस्त्राय फट्।

न्यास – नाभौ स्कन्दाय नमः। हृदये हव्यवाहनाय नमः। दक्षिणबाहुमूले रुद्राय नमः। दक्षिणबाहुमध्ये आदित्याय नमः। दक्षिणबाह्वाग्रे वसुभ्यो नमः। वामबाहुमूले वामदेवाय नमः। वामबाहुमध्ये शशिसूर्याभ्यां नमः। वामबाह्वाग्रे प्रभञ्जनाय नमः। कण्ठे नीलकण्ठाय नमः। कर्णयोर्द्वयोर्विरूपाक्षाय नमः। ललाटे ब्रह्मणे नमः। मूर्ध्नि परमात्मने नमः। अप्रगल्भे पशुपतये नमः। पृष्ठे हराय नमः। कटिप्रदेशे कालाग्निरुद्राय नमः। कुक्षौ सप्तसागराय नमः। शिश्ने प्रजापतये नमः। गुह्ये दीप्तचण्डाय नमः। जानुनोर्जाह्नव्यै नमः। कूर्मचक्रे वराहाय नमः। गुल्फयोः भैरवाय नमः। पादयोः वासुकिभ्यां नमः। पादाग्रे सर्वतीर्थेभ्यो नमः। सर्वाङ्गे सदाशिवाय नमः। भस्मोद्धूलित सर्वाङ्गे आपादतल मस्तके। रोमरोम भवेल्लिंगं स्वशरीरे शिवालये।

॥ फलश्रुति ॥

विभूतिर्निन्द्यते येन ब्राह्मणौ ह्यन्यजातिकः।
पतन्ति नरके घोरे यावद् ब्रह्माचतुर्मुखः॥
ते तावत् पतितो भूमौ भस्मानि परमाणव।

श्राद्धे यज्ञे जपे होमे वैश्वदेवे च कर्मणि ।
त्रिपुण्ड्रधारणेनैव सर्वकामफलं लभेत् ।
मध्यमानामिकाङ्गुष्ठैः क्रियामाणं त्रिपुण्ड्रकम् ॥
महाघोरकृतात् पापन्मुच्यते नात्र संशयः ।
त्रिपुड्रं ब्राह्मणो विद्वान् मनसापि न लंघयेत् ॥
श्रुत्वा विधीयते भस्म संत्यागी पतितो भवेत् ।
तस्मात् विसर्जयेत् सर्वंभस्मस्नानं समाचरेत् ॥
जलस्नानान् मलत्यागी भस्मस्नानात्सदा शुचिः ।
मन्त्रस्नानद्धरेत् पापं ज्ञानस्नानात् परंपदम् ॥
सर्वतीर्थेषु यत्पुण्यं सर्वयज्ञेषु यत्फलम् ।
तत्फलं समवाप्नोति भस्मस्नानान्न संशयः ॥
भस्मस्नाननात्परं तीर्थं गङ्गास्नानं दिनेदिने ।
भस्मरूपी शिवः साक्षाद् भस्म त्रैलोक्यपावनम् ॥
ॐ श्रीं ह्रीं विष्णुर्विष्णुः भस्मत्वं रक्षत्वम् ।
सर्वदातव्यं श्री उलटं भस्मस्त्वां फट् स्वाहा ।

*॥ इति श्रीनन्दिकेश्वर पुराणोक्त कालाग्नि रुद्रोपनिषद् ॥*

## ॥ अथ पञ्चवक्त्र (शिव) पूजनम् ॥

भगवान आशुतोष के पंचवक्त्र ब्रह्म स्वरूप पूजन में आवाहन, ध्यानक्रम एक तंत्रेण दिया गया है। तदुपरान्त पूजन एकतंत्रेण कर सकते है।.

श्वेत गंधाक्षत पुष्पों से नमस्कार करें, प्राण प्रतिष्ठा की हुई मूर्ति में आवाहन नहीं होता है अतः नाम मंत्र के साथ ध्यान करते हुये पूजन करें।

*पश्चिमवक्त्र पूजा* :— ॐ सद्योजातमित्यस्य जमदग्नि सद्योजातः ऋर्षि त्रिष्टुप छंद सद्योजातो देवता श्वेत वर्ण हंसवाहनं पश्चिमवक्त्रं पृथिवीतत्वं पश्चिमवक्त्र नमस्कारे पूजने विनियोगः।

ॐ सद्योजातो व्यमिमीत यज्ञमग्निर्देवानाम भवत्पुरोगाः ।
अस्य होतुः प्रदिश्यृतस्य वाचि स्वाहा कृत ठं हविरदन्तु देवाः ।।१ ।।

ॐ सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः ।
भवे भवे नातिभवे भवस्व मां भवोद्भवाय नमो नमः ।।२।।

(गंधसिताक्षत श्वेत पुष्पैः) सद्योजाताय श्वेतवर्णाय हंसवाहनाय पश्चिम वक्त्राय पृथिवि तत्त्वाय सृष्टिरूपात्मने ब्रह्मणे नमः।

*धेनुर्बाणमुद्रा प्रदर्शय*

वामस्य मध्यमाग्रं तु तर्जन्यग्रे नियोजयेत् ।
अनामिका कनिष्ठां च तस्याङ्गुष्ठेन पीडयेत् ।
दर्शयेद् दक्षिण स्कंधे धनुर्मुद्रेयमीरिता ।।
दक्ष मुष्टिस्थतर्जन्या दीर्घया बाणमुद्रिका ।।

(इति बाणमुद्रा)

*ध्यानम् :-*

प्रलेयामलबिन्दु कुंद धवलं गोक्षीर फेनप्रभं
भस्माभ्यङ्गमनङ्गदेहदमन ज्वालावलीलोचनम् ।
ब्रह्मेन्द्रादि मरुद्गणैः स्तुति परैरभ्यर्चितं योगिभि–
र्वन्देऽहं सकलं कलंक रहितं स्थाणोर्मुखं पश्चिमम् ।।

ततः सद्योजातस्य कला देवता पूजनम् :—

ॐ ऋद्ध्यै नमः। ॐ सिद्ध्यै नमः। ॐ धृत्यै नमः। ॐ लक्ष्म्यै नमः। ॐ मेधायै नमः। ॐ कान्त्यै नमः। ॐ स्वधायै नमः। ॐ प्रभायै नमः।

*अथोत्तरवक्त्रपूजा* :— ॐ वाममद्येत्य च वामदेवायत्यस्य मंत्रस्त्रय भारद्वाज—वामदेव ऋषि, त्रिष्टुप जगती छंद, सविता—विष्णु देवता, गरुड़ वाहन नमस्कार पूजने विनियोगः।

ॐ वाममद्द्य सवितर्वाममुश्वो दिवे दिवे वामस्मभ्यः सावीः ।
वामस्य हि क्षयस्य देव भूरेरया धिया वामभाजः स्याम ।।१।।

ॐ वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बल विकरणाय नमः ।।२।।

वामदेवाय कृष्णवर्णाय गरुड़ वाहनायोत्तर वक्त्रायापस्तत्वाय अमृतरूपात्मने विष्णवे नमः इति प्रणम्य पद्ममुद्रा प्रदर्शनम्।

करौतु संहता कृत्वासम्मुखावुन्नतांगुली ।
तलान्तर्मिलितांगुष्ठौ कुर्यादिवऽब्ज मुद्रिका ॥

(इति पद्ममुद्रा)

*ध्यानम्* –

गौरं कुंकुमपिङ्गलं सुतिलकं व्यापाण्डु गण्डस्थलं
भ्रू विक्षेप कटाक्ष वीक्षण लसत्संसक्त कर्णोत्पलम् ।
स्निग्धं बिम्बफलाधरं प्रहसितं नीलाल कालङ्कृतं
वन्दे पूर्ण शशाङ्क मण्डल निभ वक्त्रं हरस्योत्तरम् ॥

ततः त्रयोदश कला देवता पूजनम् :—

ॐ रजसे नमः। ॐ रक्षायै नमः। ॐ रत्यै नमः। ॐ पाल्यायै नमः। ॐ कामायै नमः। ॐ संजीविन्यै नमः। ॐ प्रियायै नमः। ॐ बुद्ध्यै नमः। ॐ क्रियायै नमः। ॐ धात्रै नमः। ॐ भ्रामर्यै नमः। ॐ मोहिन्यै नमः। ॐ ज्वरायै नमः।

*अथ दक्षिणवक्त्र पूजा* :— ॐ यातेरुद्र शिवेत्यस्य मंत्रस्य परमेष्ठि ऋषि अनुष्टुप छंद एको रुद्रो देवता तथा ॐ अघोरेभ्य इत्यस्य अघोरऋषि अनुष्टुप छंद रुद्रो देवता नीलवर्ण कूर्मवाहनं दक्षिणवक्त्रं तेजस्तत्वं नमस्कार पूजने विनियोगः।

ॐ या ते रुद्र शिवा तनूरघोरापापकाशिनी ।
तया नस्तन्वा शन्तमया गिरिशन्ताभि चाकशीहि ॥१॥
ॐ अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः ।
सर्वेभ्य सर्व सर्वेभ्यो नमस्ते अस्तु रुद्ररुपेभ्यः ॥२॥

*ध्यानम्* :-

कालाभ्र भ्रमराञ्चनाचल निभं व्यावृत्त पिङ्गेक्षणं
खण्डेन्दु द्वय मिश्रितांशु दशनाप्रोद् भिन्न दंष्ट्राङ्कुरम् ।

सर्प प्रोत कपाल शक्ति सकलं व्याकीर्णसच्छेखरं
वन्दे दक्षिणमीश्वरस्य कुटिलभ्रूभङ्गरौद्रं मुखम् ।।

नमस्कारं एवं ज्ञान मुद्रां प्रदर्शय।

ततौ अष्ट कलां प्रपूजयेत् – ॐ तमसे नम। ॐ मोहायै नमः। ॐ क्षयायै नमः। ॐ निद्रायै नमः। ॐ व्याधये नमः। ॐ मृतवे नमः। ॐ क्षुधायै नमः। ॐ तृषायै नमः।

*अथ पूर्वक्त्र पूजा* – ॐ यत्पुरुषमित्यस्य नारायण ऋषिः अनुष्टुप् छंदः जगद्बीजं पुरुषो देवता तथा तत्पुरुषायेत्यस्य तत्पुरुष ऋषिः गायत्री छंदः रुद्रो देवता पीतवर्णम् अश्ववाहनं पूर्ववक्त्रं वायु तत्वं पूर्ववक्र नमस्कार पूजने विनियोगः।

ॐ यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् ।
मुखङ्किमस्यासीत्किम्बाहू किमूरू पादा उच्येते ।।१।।
ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि ।
तन्नो रुद्रः प्रचोदयात् ।।२।।

तत्पुरुषाय पीतवर्णाया ऽश्ववाहनाय पूर्ववक्राय वायुतत्वाय चैतन्यात्मने आदित्याय नमः । इति प्रणम्य कवच मुद्रां प्रदर्शय। (करद्वन्दांगुल्यो वर्मणिस्यु)

*ध्यानम्* -

सवर्त्ताग्नि तडित्प्रतप्त कनक प्रस्पर्द्धितेजोरुणं
गंभीर स्मृति निः सृतोग्र दशनप्रोद्भासिताम्राधरम् ।
बालेन्दु द्युति लोलपिङ्गल जटाभार प्रबद्धोरगं
वन्दे सिद्धसुरासुरेन्द्र नमितं पूर्व मुखं शूलिनः ।।

*अथ कला पूजनम्* – ॐ निवृत्यै नमः। ॐ प्रतिष्ठायै नमः। ॐ विद्यायै नमः। ॐ शांत्यै नमः।

*अथोर्ध्ववक्त्रपूजा* – ॐ तमीशानमित्यस्य गौतम ऋषिः जगती छंदः ईशानो देवता तथा ॐ ईशान इत्यस्य ईशान ऋषिः अनुष्टुप छंदः रुद्रो देवता गोक्षीरवर्णं वृषभवाहनं आकाश तत्वं उर्ध्ववक्त्र नमस्कार

पूजने विनियोग:

ॐ तमीशानञ्जगतस्तस्थुषस्पतिन्धियान् जिन्वमवसे हूमहे वयम् ।
पूषा नो यथा वेदसा मसदवृधे रक्षिता पायुरदब्धः स्वस्तये ।।१।।
ॐ ईशानः सर्वविधानामीश्वरः सर्वभूतानां ब्रह्माधिपति
र्ब्रह्मणोधिपतिः ब्रह्मा शिवो मे ऽ अस्तु सदाशिवोम् ।।२।।

*ध्यानम्* –

व्यक्ताव्यक्त गुणोत्तरं सुवदनं षट्त्रिंशतत्वाधिकं
तस्मादुत्तर तत्वमक्षयमिति ध्येयं सदा योगिभिः ।
वन्दे तामसवर्जितेन मनसा सूक्ष्माति सूक्ष्मं परं शान्तं
पञ्चममीश्वरस्य वदनं खव्यापि तेजोमयम् ।।

ततः पञ्चकला पूजनम् – ॐ शशिन्यै नमः। ॐ अङ्गदायै नमः। ॐ इष्टायै नमः। ॐ मरीच्यै नमः। ॐ ज्वालिन्यै नमः।

अथ यथायथोपचारैन पंचवक्त्र पूजनम् (एक तंत्रेण)

*पश्चिमवक्त्र पूजा* – गंध मनशिला चन्दन श्वेताक्षतपुष्प गुग्गुलु धूप घृत दीप पायस नैवेद्यादिभिः पूजनम् । एवं प्रार्थयेत्

शुभ्रं त्रिलोचनं नाम्ना सद्योजातं शिवप्रदम् ।
शुद्ध स्फटिक संकाशं वन्देऽहं पश्चिमं मुखम् ।।

*उत्तरवक्त्र पूजा* – हरिचन्दन तुलसीशतपत्र(मंजरी) पुष्प पंचसौगंधिक धूप घृत पक्कगोधूमान्न नैवेद्याभिः पूजनम्। एवं प्रार्थयेत् –

वामदेवं सुवर्णाभं दिव्यास्त्रगण सेवितम् ।
अजन्मानमुमाकान्तं वन्देऽहं ह्युत्तरं मुखम् ।।

*दक्षिणवक्त्र पूजा* – कृष्णागरु चन्दन नीलोत्पल करवीरपुष्प सितागरु धूप माषान्न नैवेद्यादिभिः पूजनम्। एवं प्रार्थयेत्–

नीलाभ्रवर्णमोकारमघोरं घोरदंष्ट्रकम् ।
दंष्ट्राकराल मत्युग्रं वन्देऽहं दक्षिणं मुखम् ।।

*पूर्ववक्त्र पूजा* – हरिताल चन्दन दुर्वांकुरार्कपुष्पान्यतर पुष्प कृष्णागरु धूप मोदक नैवेद्यादिभिः पूजनम्। एवं प्रार्थयेत–

बालार्कवर्णमारक्तं पुरुषं च तडित्प्रभम्।
दिव्यं पिङ्गजटाधारं वन्देऽहं पूर्वदिङ्मुखम्॥

*उर्ध्ववक्त्र पूजा* – भस्म चन्दन बिल्वपत्र कनकपुष्प ऋतु भवान्य पुष्प हरिचन्दन धूप शर्करा दध्योदन नैवेद्यादिभिः पूजनम्। एवं प्रार्थयेत्–

ईशानं सूक्ष्ममव्यक्तं तेजः च पुञ्जपरायणम्।
अमृतस्त्रावि चिद्रूपं वन्देऽहं पंचमं मुखम्॥

*इति पवक्त्र पूजां कृत्वा देवस्यवामभागे शक्ति पूजनम्* - ॐ उमायै नमः। ॐ शंकर प्रियायै नमः। ॐ पार्वेत्यै नमः। ॐ गौर्यै नमः। ॐ काल्यै नमः। ॐ कालिन्द्यै नमः। ॐ कोटर्यै नमः। ॐ विश्वधारिण्यै नमः। ॐ ह्रां नमः। ॐ ह्रीं नमः। ॐ गंगादेव्यै नमः।

ततः ॐ गणपतये नमः। ॐ कार्तिकाय नमः। ॐ पुष्पदंताय नमः। ॐ कपर्दिने नमः। ॐ भैरवाय नमः। ॐ शूलपाणये नमः। ॐ ईश्वराय नमः। ॐ दण्डपाणये नमः। ॐ नंदिने नमः। ॐ महाकालाय नमः।

॥ इति संपूज्य॥

## *ततः एकादश रुद्रार्चनम्* -

ॐ अघोराय नमः। ॐ पशुपतये नमः। ॐ शर्वाय नमः। ॐ विश्वरूपिणे नमः। ॐ त्र्यम्बकाय नमः। ॐ कपर्दिने नमः। ॐ विरूपाक्षाय नमः। ॐ भैरवाय नमः। ॐ शूलपाणयै नमः। ॐ ईशानाय नमः। ॐ महेश्वराय नमः।

ततो रुद्राभिषेकं कृत्वा। शुद्धोदक स्नान वस्त्रोपवित गंधाक्षत पुष्पाणि समर्प्य। बिल्वपत्रार्पणं कुर्यात्। तदनंतर सौभाग्यद्रव्य धूप दीप नैवेद्य ताम्बूल दक्षिणा आर्तिक्य प्रदक्षिणा मंत्र पुष्पांजली विशेषार्घाद्युपचारान् समर्प्य।

*राजोपचारे* - (*यथा*)

छत्रं च चामरं चैव व्यञ्जनं दर्पण तथा ।

पादुकानि च सर्वाणि गृह्यतां परमेश्वर ।।

(अभावे कल्पयामि)

।। इति पंचवक्त्र पूजा विधानम्।।

## ।। अथ अष्टादशरेखात्मक चतुर्लिंगतोभद्र मण्डल ।।

(व्रतोद्यापान चन्द्रिकानुसारेण)

(१). *पूर्वलिंगेषु* — (अधः, मध्य, अग्रभागे) वीरभद्राय नमः वीरभद्र आ. स्था.। (१) शंभवे नमः शंभु आ. स्था.। (२) अजैकपदे नमः अजैकपाद आ. स्था.। (३) *दक्षिणलिंगेषु* — अहिर्बुध्न्याय नमः हिर्बुध्न्य आ. स्था. । (४) पिनाकनये पिनाकिन आ. स्था.। (५) शूलपाणये नमः शूलपाणि आ. स्था.। (६)

*पश्चिम लिंगेषु* — भुवनाधीश्वराय नमः भुवनाधीश्वर आ. स्था.। (७) कपालिने नमः कपालिन आ. स्था.। (८) दिकपतये नमः दिकपतिं आ. स्था.। (९)

*उत्तर लिंगेषु* — रुद्राय नमः रुद्र आ. स्था.। (१०) शिवाय नमः शिव आ. स्था.। (११) महेश्वराय महेश्वर आ. स्था.। (१२)

*चतुष्पद वल्यकाम् हरितखंडे ईशानाद्याष्ट दिक्षु* — असितांग भैरवाय नमः असितांग भैरव आ. स्था.। (१३) रुरुभैरवाय रुरुभैरव आ. स्था.। (१४) चण्डभैरवाय नमः चण्डभैरव आ. स्था.। (१५) क्रोध भैरवाय नमः क्रोध भैरव आ. स्था.। (१६) उन्मत्त भैरवाय नमः उन्मत्त भैरव आ. स्था.। (१७) काल भैरवाय नमः काल भैरव आ. स्था.। (१८) भीषण भैरवाय नमः भीषण भैरव आ. स्था.। (१९) संहार भैरवाय नमः संहार भैरव आ. स्था.। (२०)

३. *शृंखला समीपे त्रिपद पीतवल्ल्याम् ईशानाद्यष्ट दिक्षु चतुर्विंशति*

*देवता* – भवाय नमः भवाय आ. स्था.। (२१) शर्वाय नमः शर्वं आ. स्था.(२२)। रुद्राय नमः रुद्रं आ. स्था.(२३)। पशुपतये नमः पशुपतिं आ. स्था.(२४)। महते नमः महन्तं आ. स्था.। (२५) भीमाय नमः भीमं आ. स्था.(२६)। ईशानाय नमः ईशानं आ. स्था.(२७)। अनंताय नमः अनंतं आ. स्था.(२८)। तक्षकाय नमः तक्षकं आ. स्था.(२९)। वासुकये वासुकिं आ. स्था.(३०)। कुलीशकाय नमः कुलीशं आ. स्था.(३१)। कर्कोटकाय नमः कर्कोटकं आ. स्था.(३२)। शंखपालाय नमः शंखपालं आ. स्था.(३३)। कंबलाय नमः कंबलं आ. स्था.(३४)। अश्वतराय नमः अश्वतर आ. स्था.(३५)। शूलिने नमः शूलिनं आ. स्था.(३६)। चन्द्रमौलये नमः चन्द्रमौलिं आ. स्था.(३७)। चन्द्रमसे नमः चन्द्रमसं आ. स्था.(३८)। वृषभध्वजाय नमः वृषभध्वज़ं आ. स्था.(३९)। त्रिलोचनाय नमः त्रिलोचनं आ. स्था.(४०)। शक्तिधराय नमः शक्तिधरं आ. स्था.(४१)। महेश्वराय नमः महेश्वरं आ. स्था.(४२)। शूलधारिणे नमः शूलधारिणं आ. स्था.(४३)। स्थाणवे नमः स्थाणुं आ. स्था.(४४)।

४. *मध्येकार्णिकायाम्* – ब्रह्मणे नमः ब्राह्मण आ. स्था.(४५)। (उत्तर शिवलिंगस्याधः) सोमाय नमः सोमं आ. स्था.(४६)। ईशान्यां खण्डेदो – ईशानाय नमः ईशानं आ. स्था.(४७)। (पूर्वालिंगस्याधः) इंद्राय नमः इंद्रं आ. स्था.(४८)। आग्नये खंडेदौ – अग्नेये नमः अग्निं आ. स्था.(४९)। (दक्षिण लिंग स्याधः) यमाय नमः यमं आ. स्था.(५०)। नैर्ऋत्यां खंडेदौ – निर्ऋत्यये नमः निर्ऋत्यं आ. स्था.(५१)। पश्चिम लिंगास्याध – वरुणाय नमः वरुणं आ. स्था.(५२)। वायव्यां खण्डेदौ – वायवे नमः वायुं आ. स्था.(५३)।

५. *अष्टरक्तभद्रे* – वायुसोमयोर्मध्ये – अष्टवसुभ्यो नमः अष्टवसुं आ. स्था.(५४)। सोमेशानयोर्मध्ये – एकादशरुद्रेभ्यो एकादशरुद्रान् आ. स्था.(५५)। ईशानेन्द्रयोर्मध्ये – द्वादशादित्येभ्यो नमः द्वाशादित्यान् आ. स्था.(५६)। इन्द्राग्नेयोर्मध्ये – अश्विभ्यां नमः अश्विनौ आ. स्था.(५७)। अग्नियमयोर्मध्ये – विश्वेभ्यो देवेभ्यो नमः विश्वदेवान् आ. स्था.(५८)। यमनिर्ऋत्योर्मध्ये – सप्तयक्षेभ्यो नमः सप्तयक्षान् आ. स्था.(५९)।

निर्ऋत्यवरुणयोर्मध्ये – भूतनागेभ्यो नमः भूतनागान् आ. स्था.(६०)। वरुणवायव्योर्मध्ये – गंधर्वाप्सरोभ्यो नमःगंधर्वाप्सरसः आ. स्था.(६१)।

६. *उत्तरलिंगस्याधः* – स्कंदाय नमः स्कंद आ. स्था.(६२)। तत्रैव – नन्दीश्वराय नमः नन्दीश्वर आ. स्था.(६३)। *तत्रैव* – शूलमहाकालाभ्यां नमः शूलमहाकाल आ. स्था.(६४)।

*ब्रह्मेशानयोर्मध्ये शृंखलायाम्* – दक्षादि सप्तकाय नमः दक्षादि सप्तकान् आ. स्था.(६५)। *पूर्वलिंगस्याधः* – दुर्गायै नमः दुर्गा आ. स्था.(६६)। *तत्रैव* – विष्णवे नमः विष्णुं आ. स्था.(६७)।

*ब्रह्माग्नयोर्मध्यो शृंखलायाम्* – स्वधायै नमः स्वधा आ. स्था. (६८)। *दक्षिणलिंगस्यधः* – मृत्युरोगाभ्यां नमः मृत्युरोगौ आ. स्था.(६९)। *ब्रह्म निर्ऋत्योर्मध्ये शृखलायाम्* – गणपतये नमः गणपतिं आ. स्था.(७०)। *पश्चिमलिंगास्याधः* – अद्भ्यो नमोऽपः आ. स्था.(७१)। *ब्रह्मवायोर्मध्ये शृखलायाम्* – मरुद्भ्यो नमः मरुतः आ. स्था.(७२)।

७. *ब्रह्मणः पादमूले कर्णिकायाम्* – पृथिव्यै नमः पृथिवीं आ. स्था.(७३)। तत्रैव – गंगादिनदीभ्यो नमः गंगादिनदीः आ. स्था.(७४)। सप्तसागरेभ्यो नमः सप्तसागरान् आ. स्था.(७५)। ब्रह्मणो मस्तके कर्णिकोपरि – मेरवे नमः मेरुम् आ. स्था.(७६)।

८. *उद्क्लिंगे* – सद्योजाताय नमः सद्योजात आ. स्था.(७७)। प्राच्यालिंगे वामदेवाय नमः वामदेव आ. स्था.(७८)। *दक्षिणलिंगे* – अघोराय नमः अघोर आ. स्था.(७९)। *प्रतीची लिंगे* – तत्पुरुषाय नमः तत्पुरुषाय आ. स्था.(८०)। कर्णिकायां मेरुपरि ईशानाय नमः ईशान आ. स्था.(८१)।

९. *मध्य परिधौ (पीतवर्णे षोडश पदे)* – परिधवे नमः परिधि आ. स्था.(८२)। मेरोः परिधि – समंतात् लिंगानां स्कन्धे विशांति रक्त कोष्ठेषु (पंचपदा प्रीतकोणेषु) –चतुः पुरीभ्यो नमः चतुश्पुरीः आ. स्था.(८३)। आग्नेयादिषु त्रिपद कोणेषु शृखला शिरसि – ऋग्वेदाय नमः ऋग्वेद आ. स्था.(८४)। यजुर्वेदाय नमः यजुर्वेद आ. स्था.(८५)। सामवेदाय नमः

सामवेद आ. स्था.(८६)। अथर्वेदाय नमः अथर्ववेद आ. स्था.(८७)।

१०. *उत्तरलिंगास्य दक्षिणवापीमारभ्य वामवापी पर्यन्तासु पंचदा वाप्यां* - भवाय नमः भवाय आ. स्था.(८८)। शर्वाय नमः शर्व आ. स्था. (८९)। पशुपतये नमः पशुपतिं आ. स्था.(९०)। ईशानाय नमः ईशान आ. स्था.(९१)। उग्राय नमः उग्रम् आ. स्था.(९२)। रुद्राय नमः रुद्रं आ. स्था. (९३)। भीमाय नमः भीम आ. स्था.(९४)। महते नम महान्तम् आ. स्था. (९५)।

११. *वापीसमीपस्थैकैकपद्देषु पीतवर्णेषु क्रमशः* – भवान्यै नमः भवानीं आ. स्था.(९६)। शर्वाण्यै नमः शर्वाणीं आ. स्था.(९७)। पशुपत्यै नमः पशुपतिं आ. स्था.(९८)। ईशान्यै नमः ईशानीं आ. स्था.(९९)। उग्रायै नमः उग्राम् आ. स्था.(१००)। रुद्राण्यै नमः रुद्राणीं आ. स्था.(१)। भीमायै नमः भीमां आ. स्था.(२)। महत्यै नम महातीं आ. स्था.(३)।

१२. *पूर्वादिक्रमेण परिधि समीपे* – (पूर्वे) ॐ पृथ्वी तत्वाय नमः आ. स्था.(४)। (दक्षिणे) जलतत्वाय नमः आ. स्था.(५)। (पश्चिमे) तेजस्तत्वाय नमः आ. स्था.(६)। (उत्तरे) वायुतत्वाय नमः आ. स्था.(७)। मध्ये – आकाश तत्वाय आ. स्था.(८)।

१३. *बाह्यश्वेत परिधौ उत्तरतः सोमारभ्य वायुपर्यन्तमायु* ६ *ान्नि* – गदायै नमः गदा आ. स्था.(९)। त्रिशूलाय नमः त्रिशूलम.(१०)। वज्राय नमः वज्रम.(११)। शक्तये नमः शक्तिं.(१२)। दण्डाय नमः दण्डम्. (१३)। खड्गाय नमः खड्गं.(१४)। पाशाय नमः पाशम्.(१५)। अंकुशाय नमः अंकुशं.(१६)।

१४. *तद्बाह्ये रक्तपरिधौ उत्तरतः क्रमेण* – गौतमाय नमो गोतमं आ. स्था.(१७)। भारद्वाजाय नमो भारद्वाजं.(१८)। विश्वामित्राय नमा विश्वमित्रं.(१९)। कश्यपाय नमः कश्यपं आ. स्था.(२०)। जमदग्नये नमः जमदग्निं आ.(२१)। वशिष्ठाय नमो वशिष्ठ.(२२)। अत्रये नमो ऽत्रयिम्. (२३)। अरुंधत्यै नमो ऽ रुन्धतीम्. आ. स्था.(२४)।

१५. *तद्बाह्ये कृष्ण परिधौ उत्तरतः क्रमेण* – ऐन्द्र्यै नमः ऐन्द्रीं आ.(२५)। कौमार्यै नमः कौमारीं.(२६)। ब्राह्म्यै नमो ब्राह्मीं.(२७)। वाराह्यै नमः वाराहीं आ.(२८)। चामुण्डायै नमः चमुण्डां आ.(२९)। वैष्णव्यै नमः वैष्णवीं आ.(३०)। माहेश्वर्ये नमो माहेश्वरीं आ.(३१)। विनायिक्यै नमो वैनायिकीं आ. स्था.(३२)।

।। एताः चतुर्लिंगतो भद्र मंडल देवता सुप्रतिष्ठताः वरदा भवन्तु ।।

## ॥ अथ नीलकण्ठ स्तोत्रम् ॥

यह बडवानल नीलकण्ठ स्तोत्र रोग, सङ्कट, ग्रहपीड़ा, भूतप्रेतादि दोष तथा विष योग को नष्ट करता है। शत्रुओं के षडयन्त्र को नष्ट करता है।

॥ ॐ नमः शिवाय ॥

**ॐ नीलकण्ठं जगन्नाथं निर्मलानन्दविग्रहम् ।**
**हृदिध्यात्वा प्रवक्ष्यामि यन्त्रसिद्धत्वमेव च ॥**
**नमस्ते नीलकण्ठाय सर्वमन्त्रविशारदः ।**
**नीलकण्ठास्त्रविद्या च अथर्वणशिरः शिखा ॥**
**वद मे करुणासिन्धो कृतसर्वोपकारकम् ।**
**सर्वमन्त्रमयीविद्या सर्वशास्त्रार्थमेव च ॥**
**क्षेत्रसिद्धिप्रदं मन्त्रमाद्यानां क्षिप्रसिद्धिदम् ।**
**अपि रोगघ्नविद्या च अद्भुतं शुभदायकम् ॥**
**षट्कर्मसिद्धिदांविद्या वषट्कारात्मको मनुः ।**
**वडवानलमन्त्रेषु अस्त्राणां वडवानलैः ॥**
**अथर्वणमहाविद्या मन्त्रराजेषु भूतले ।**
**एतत् विद्या समं देवि नास्तीत्युक्त्या पुनः पुनः ॥**
**सर्वविद्यां पदं स्वामिन् ममापेक्षा च वर्तते ।**

॥ श्रीईश्वरोवाचः॥

**साधु साधु महादेवि सर्वमन्त्रविशारदे ।**
**एतदधारिणीविद्या महासिद्धिप्रदायिका ॥**

विनाभूशुद्धिभूतं च विनाकर्म कलौ युगे ।
न्यासध्यानं विनां देवि सर्वसिद्धिप्रदायकः ॥
अथर्वणास्त्रं तृतीयंनीलकण्ठश्चचतुर्थकम् ।
एकविंशत् समायुक्तं एतते वडवानलम् ॥
अथर्वणास्त्रशिरसि नीलकण्ठशिखामनुः ।
साधकस्तु जपेत् सिद्धिः सार्वभौमवरप्रदाम् ॥
सर्वदा सर्वरोगघ्नीं सर्वदा भयनाशिनीम् ।
सर्वदा क्रूरसर्पादिभयं नास्तीति साधके ॥
चौरादिराजराजादिभयं किचिन्न विद्यते ।
बालग्रहपिशाचादि मन्त्राणामभिमन्त्रितम् ॥
नीलकण्ठास्त्रमन्त्रेण बालानां रोगनाशनम् ।
सद्यो विमुक्ती रोगाणां त्रिवारं मन्त्रितं बुधैः ॥
त्रिवारं मन्त्रितं भस्मयाचयेदुष्णवारिणा ।
एवं ज्वरादयः सर्वेकार्यलाघवगौरवात् ॥
त्रिदिनं पञ्चरात्रं वा ज्वरशान्तिर्भविष्यति ।
नानारोगांश्चोदरस्थान् गुल्मानि बहुलानि च ॥
स्पृष्टवा मन्त्रेण मन्त्रैर्वा सप्तहाच्छान्तिमाप्नुयात् ।
चन्द्रसूर्योपरागेषु लक्ष्मीसर्वेषु साधकः ॥
पुरश्चर्या प्रकुर्वीत मन्त्रसिद्धिर्भवेन्नरः ।
अथवा कार्तिके मासे माघवैशाखमासयोः ॥
पुरश्चर्या विधानेन जपसिद्धिमवाप्नुयात् ।
येनेदं नीलकण्ठास्त्रं महाविद्यां च साधकः ॥
सर्वदा विचरेद्देवी जपेन्मन्त्रं महामनुः ।
यं यं वापि स्मरेच्छान्ति तं तं प्राप्नोति निश्चितम् ॥
मालामन्त्रमहाविद्या नीलकण्ठास्त्रमेव च ।
पुत्राय च सशिष्याय दातव्यं नात्र संशयः ॥

विनियोग – ॐ अस्य श्रीमहानीलकण्ठ अथर्वणः शिरः। शिखा वडवानल

नीलकण्ठास्त्र महामन्त्रस्य अथर्वण ऋषिः, नानाछन्दांसि, श्रीमहा नीलकण्ठोरुद्रो देवता, ह्रीं बीजं, सः शक्तिः, ग्लौं कीलकं, श्रीनीलकण्ठ वर प्रसाद प्रीत्यर्थे जपे विनियोगः।

न्यास – अथर्वणऋषये नमः शिरसि। नानाछन्दोभ्यो नमः मुखे। श्रीमहा नीलकण्ठोरुद्रो देवतायै नमः हृदि। हुं बीजाय नमो गुह्ये। सः शक्तये नमः पादयोः। ग्लौं कीलकाय नमः नाभौ। विनियोगाय नमः सर्वाङ्गे।

कराङ्गन्यास – ॐ ह्रां वडवानलास्त्राय नीलकण्ठास्त्राय अंगुष्ठाभ्यां नमः। ॐ ह्रीं अथर्वणशिखा नीलकण्ठास्त्राय तर्जनीभ्यां नमः। ॐ ह्रूं कालरुद्राय नीलकण्ठास्त्राय मध्यमाभ्यां नमः। ॐ ह्रैं नीलकण्ठास्त्राय अनामिकाभ्यां नमः। ॐ ह्रौं व्योमव्यापिने हिरण्ययाय नीलकण्ठास्त्राय कनिष्ठिकाभ्यां नमः। ॐ ह्रः अनेक ब्रह्माण्ड नीलकण्ठास्त्राय करतलकरपृष्ठाभ्यां नमः।

हृदयादिन्यास – ॐ ह्रां वडवानलास्त्राय नीलकण्ठाय हृदयाय नमः। ॐ ह्रीं अथर्वण शिखानीलकण्ठास्त्राय शिरसे स्वाहा। ॐ ह्रूं कालरुद्राय नीलकण्ठाय शिखायै वषट्। ॐ ह्रैं नीलकण्ठास्त्राय कवचाय हुम्। ॐ ह्रौं व्योमव्यापिने हिरण्याय नीलकण्ठास्त्राय नेत्रत्रयाय वौषट्। ॐ ह्रः अनेक ब्रह्माण्डाय नीलकण्ठास्त्राय अस्त्राय फट्।

॥ ध्यानम् ॥

बाणं कालान्तकालं ह्यभयवरकरं सोमसूर्य्याग्निनेत्रम् ।
कालं कालाग्निरुद्रं त्रिपुरहरमहामन्मथं दह्यमानम् ॥
खड्गं खेटं पिनाकं सपरशुडमरूभिन्दिपालं त्रिशूलम् ।
घोरास्त्रं पञ्चवक्त्रं गलनिहितगरं नीलकण्ठ भजेऽहं ॥

॥ मानस पूजनम् ॥

अथर्वणास्त्रमन्त्र च वडवानलनामकम् ।
नीलकण्ठास्त्रविद्याख्यं मन्त्ररूपं हृदि स्मरेत् ॥
कोटिसूर्यप्रतीकाशं ताण्डवप्रलयाकृतिम् ।
भस्मीकृतजगद् व्याप्तं विग्रहं च समाश्रये ॥
मृत्युघ्नं पापदमनं घृतानाममृतप्रदम् ।
सुधामयं नीलकण्ठमस्त्ररूपं हृदि स्मरेत् ।
एवं विकालप्रयोगं प्रजपेत् साधकोत्तमः ।

सर्वार्थसिद्धिः पठनात् तेजोवृद्धिकरं परम् ॥

मानस पूजन करें -

ॐ लं पृथिव्यात्मकं नीलकण्ठाय नमः, गन्धं समर्पयामि। हं आकाशात्मकं नीलकण्ठाय नमः, पुष्पं समर्पयामि। यं वाय्वात्मकं नीलकण्ठाय नमः, धूपम् समर्पयामि। रं अग्न्यात्मकं नीलकण्ठाय नमः, दीपम् समर्पयामि। वं अमृतात्मकं नीलकण्ठाय नमः, नैवेद्यम् समर्पयामि। सं सर्वात्मकं नीलकण्ठाय नमः, ताम्बूलं समर्पयामि।

॥ माला मन्त्रः ॥

ॐ आं ह्रीं ग्लौं ऐं क्लीं सौं श्रीं स्त्रां क्षां क्षां वं क्रौं एहि एहि महानीलकण्ठाय परमितवक्त्राय आविर्भूत चतुर्दशभुवनाय अण्डज पिण्डज उद्भिजजरायुज अन्तर्यामिने पञ्चवक्त्राय पञ्चाननाय उमावराय वृषभवाहनाय भस्मोद्धूलितविग्रहाय भाललोचनाय परमहंसाय पञ्चतत्त्वस्वरूपाय पञ्चाग्निमयाय पद्मबाणान्तकाय तत्पुरुषाय घोर घोर सद्योजात वामदेवेशाय अनादि पञ्चब्रह्माण्डाय अष्टमूर्तये सृष्टिरक्षण संहार तत्पराय रक्षोगण निकृन्ताय लक्ष्मीवरसखाय त्रिपुरान्तकाय त्र्यम्बकाय त्रिदश पूजिताय त्रिनेत्राग्निमयाय त्रयीपुष्करात्मिकाय ज्वलस्वरूपाय जगज्जनकाय ॐ ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः क्षां क्षीं क्षूं क्षैं क्षौं क्षः ग्लां ग्लीं ग्लूं ग्लौं ग्लं ग्लः झ्रां झ्रीं झ्रूं झ्रैं झ्रौं झ्रः छ्रां छ्रीं छ्रूं छ्रैं छ्रौं छ्रः रां रीं रूं रैं रौं रः रवि कोटि प्रभाय रजोगुण दूराय कैलाशवासिने करुणाकराय कन्दर्पकोटी कान्तियुक्ताय युगान्तकाय प्रलयरुद्राय कामिक फलप्रदाय कलिन्दराय एकमूर्ति द्विमूर्ति त्रिमूर्ति चतुमुर्ति पञ्चमूर्ति मयाय पञ्चवक्त्राय पञ्चदर्शन करुणाय लोकान्विताय अनन्त ब्रह्माण्ड मयाय काल ब्रह्मेश्वराय अवरलवर अन्धकासुर संहारकारिणे अमित पराक्रमाय तारकासुर निरनाशकाय वडवानल नीलकण्ठाय स्फुर स्फुर प्रस्फुर प्रस्फुर परम कारुणीकाय घोर घोरतर तनुरूप तत्त्वात्मिकाय चट चट प्रचट प्रचट परमहंस निर्वापणाय कह कह यम यम बम बम गंगाधराय बन्धय बन्धय घातय घातय मङ्गल प्रदाय प्रदाय वीर यु क ए इ ल ह्रीं कालरूपधराय ह स क हल ह्रीं सच्चिदानन्दाय सकल ह्रीं ह्रीं ह्रीं नित्यमुक्ति प्रियाय एकाहिक द्वाहिक त्र्याहिक चातुर्थिक पक्ष ज्वर मासिकज्वर साम्वत्सरिकज्वर सर्वज्वरान् नाशय नाशय वातरोग स्वासरोग पैत्रकरोग श्लेष्मरोगान् हर हर यू क्रिमी ज्वरान् नाशय नाशय पिशाचादीन् निकृन्तय निकृन्तय आविर्भूतानन्त ब्रह्माण्डकाय विश्वमयाय

सास्वतहिरामग्राय ह्ु ह्रं ह्रूं कृतभस्मोद्धूलित सर्वोत्तम किङ्किणींरव महाशङ्कराय उमार्द्धदेहाय चन्द्रशेखराय नानाविषं सर्वविषं हर हर शमय शमय निर्विषं दन्तीविषं धत्तूरविषं कृत्रिमविषं शमय शमय प्रधान अमृतं नीलकण्ठाय आवेश आवेश स्फुर स्फुर सूर्य शशांकाय चन्द्रकोटि सुशीतलाय सान्द्र सिन्दूरमयाय आं ह्रीं क्रों कालरुद्राय करुणाकराय हर विषं हर रोगान् हर निकृन्तनाय कृत्रिमान् निर्नाशय निर्नाशय ग्रह निग्रह अनुग्रहान शमय शमय शान्तिं कुरु कुरु प्रारब्ध संचित क्रियमाणान् नाशय नाशय अकारण बान्धवाय अनवरत लक्षणैक कटाक्ष परायणाय सर्वसिद्धि प्रदाय चिन्तित मनोरथ सुन्दराय आनन्द परायणाय मां रक्ष रक्ष शत्रून् द्वेषकान् किल्विषासाद्रसोदुर्मपाय आं ह्रीं क्रां हुं कालरुद्राय करुणाकराय कृत्रिमधारकान् शत्रून् क्षुद्धौघधरान् भस्मी कुरु कुरु असुयापरान् निकृन्तय परमन्त्र परयन्त्र परतन्त्र चेटक परवाक्कटु परजपहोम कृत अभिचारान् नाशय नाशय स्वमन्त्र स्वयन्त्र स्वतन्त्र स्वकृत प्रयागान् प्रकाशय प्रकाशय मे मनोरथान् क्षिप्रं सफलं कुरु कुरु सर्वजगन्मयाय स्वतन्त्र स्वमन्त्र स्वयन्त्र मयाय सर्वाङ्गं सकल वैद्यकार्चे यशावराधनेकादितन्त्र स्वरूपाय पञ्चवक्त्र वडवानलाय नीलकण्ठाय एहि एहि आगच्छ आगच्छ सुहृदयकमल आहितोभव संस्थापिता भव सर्वतोमुख सदाशिवाय सर्वाय मकर किरीट कोटि कान्त्यालंकृताय पाद पद्माय आं ह्रीं क्रों वडवानल प्रलयाग्नि अथर्वणास्त्र नीलकण्ठाय ममैव हृदये सदा स्फुर स्फुर प्रलयानल घोर घोरतर तनुरूप चट चट प्रचट प्रचट वं वं नीलकण्ठाय वडवानल अथर्वणास्त्ररूपिणो वरदाभयक्षिप्रप्रसन्नो भव मम कायिक वाचिक मानसिक सिद्धि देहि देहि हुं हुं आं हां वं ॐ क्रों अमृत नीलकण्ठाय मम हृदये वशं मम काल मृत्युर्विनाशनं कुरु अपमृत्यु निर्दलनं कुरु अपमृत्युं प्रधान् अमृत नीलकण्ठाय मम शरीरे अमृतं कुरु कुरु अत्यन्त लक्ष्मीसरस्वती निदानं कुरु कुरु ममैव कर स्पर्शान् नाना रोगान् नाशय नाशय भूत प्रेत पिशाच ब्रह्मराक्षस शाकिनी डाकिनी रुद्रपिशाचान् अनेक भूत प्रेत पिशाचान् पलायनं कुरु मम मनसा स्मरण मात्रेण दारिद्रं विदारित विग्रहस्थस्य अपरमितैश्वर्य प्रसन्नं कुरु कुरु वाक्सिद्धिं देंहि नीलकण्ठ नवनाथाय चतुरशीतिसिद्धैः सदा पूजितचरणकमलाय चर्चित चिद्रूपाय निवारसूकररूपाय चिनानन्द ज्ञान भक्ति वैराग्य प्रदाय मम हृदये आवेशय सदानन्द सर्वकामित सर्वज्ञ आगतानागता ज्ञानवान् कुरु कुरु चतुष्षष्ठिविद्या प्रवीणां कुरु कुरु आँ ह्रां ऐं ग्लों झ्रां क्लीं श्रीं ह्रीं क्रों सद्यः सकलविद्याप्रदा नीलकण्ठाय वद वद वाग्विद्वासं मां कुरु कुरु प्रचण्ड ब्रह्माण्ड

परिपूरित विद्या नीलकण्ठ वाग्विलास चण्डवान् कुरु कुरु क्रों ऐं ह्रूं स्त्राँ आँ उल्लसत्तटि नीलकण्ठाय उत्कृष्ट फलप्रदाय उमार्धशरीराय उत्तरोत्तर चिरकाल महादारिद्र अंधकार निलयवन्तं निर्मलैश्वर्यनिदा नित्यानन्द लक्ष्मी सारस्वतं कुरु कुरु लक्ष्मीतत् पदाम्बुज लक्ष्मीप्रद नीलकण्ठ मां रक्ष रक्ष मम शत्रून् सद्योदारिद्रवन्तं कुरु कुरु अत्यन्त रोगजाड्य पीठान् कुरु कुरु शत्रून् विद्यान् शमदमादि शान्ति गुणप्रदाय परम अचरलैक महामहानीलकण्ठाय खण्डतं वैदि दण्ड प्रचण्ड दोर्दण्ड पिण्डि कृत वैरि मण्डलाय अमर पुण्डरीक सखाय द्रां द्रीं द्रुं द्रैं द्रौं द्रः ढक्कावाद्य प्रियाय नरकपाल हस्ताय शाश्वतकीर्तये सहस्त्रभुजाय सर्व मन्त्र सिद्धिं कुरु कुरु अयुतभुजाय आयुतार्णवाय आयुष्मन्तं कुरु कुरु नीलकण्ठाय सततं मम हृदये चिन्तित मनोरथ सिद्धिं कुरु कुरु चिदानन्दकान् कुरु कुरु पञ्चवक्त्र शतवक्त्र सहस्त्रवक्त्र अयुतवक्त्र अनन्तवक्त्र अनन्तानन्तभुज अनंतभुजब्रह्माण्ड परिपूर्ण विराट्रूपाय विश्वतोमुख विश्वरूपाक्ष ॐ क्लीं ह्रीं ह्रीं फट् स्वाहा रूपं महापशुपतास्त्राय। ह्रां ह्रीं क्लीं ऐं ग्लौं श्रीं ह्रीं क्रौं संमोहनाय महापशुपतास्त्राय बडवानल नीलकण्ठास्त्रा एहि एहि आगच्छ आगच्छ स्फुर स्फुर प्रस्फुर प्रस्फुर प्रलयानल घोरतर तनुरूपाय चट चट प्रचट प्रचट सम्मोहनाय सदा मां रक्ष रक्ष मम हृदये सदा स्थिरो भव वरप्रदो भव साक्षात्कार सिद्धिप्रदो भव चर्मचक्षुष्क दर्शन्प्रदोभव सिद्धि महाथर्वणास्त्राय प्रलयानल मृत्युञ्जय प्रसन्न सम्मोहन पाशुपत दर्शय दर्शय सहशत्रु मन्त्र खणुन विषंध्वंशनवीर घोरनीलकण्ठास्त्राय वीरघोर मां रक्ष रक्ष मम हृदये सदा स्थिरो भव मङ्गलानां दोषान् संमंगल सहस्त्रानन्तब्रत नीलकण्ठास्याय हुं फट् स्वाहा।

कण्ठादिदारुणं अंकंडं मन्त्रं अस्त्रं
च अथर्वणशिखास्त्रकम्।
सहस्त्रं यो जपेद् विद्वान् मुण्डं च मुखरोपि वा।
येन केनापि जपतो मन्त्रसिद्धि मवाप्नुयात्।
कालरुद्रमहानाम्ना विषं च ध्वंनन्तथा॥
श्रीमहानीलकण्ठाख्यं अस्त्रराजमिदं कृतम्।
जपात् कुष्ठशरीराणां निर्मलं देहमाप्नुयात्॥
अष्टादशानि कुष्ठानि नश्यन्ते नात्र संशयः॥

*॥ इत्यं अथर्वण रहस्ये अनेक मन्त्र संपूटितं प्रसिद्धमिदं नीलकण्ठस्तोत्रं सम्पूर्णम्॥*

# ॥ अथ श्रीनीलकण्ठ स्तोत्रम् ॥

इस स्तोत्र के पाठ से १२ नाग दोष सर्प भय, ग्रह पीड़ा निवारण, रोगनाश व अभिचार कर्म नष्ट होते हैं।

॥ ध्यानम् ॥

**बालार्कयुत तेजसं धृतजटा जूटेन्दुखण्डोज्ज्वलं ,**
**नागेन्द्रैः कृत भूषणं जपवटीं धत्ते कपालं करैः ।**
**खट्वाङ्गं दधतं त्रिनेत्रविलसत् पञ्चाननं सुन्दरं ,**
**व्याघ्रत्वक्परिधान मब्जनिलयं श्रीनीलकण्ठं भजे ॥**

**विनियोग** – अस्य श्रीनीलकण्ठ स्तोत्रस्य ब्रह्माऋषिः, अनुष्टुप्छन्दः, श्रीनीलकण्ठ सदाशिवो देवता, ब्रह्मबीजं, पार्वतीशक्तिः, शिवकीलकं, मम कायजीवरक्षणार्थे, सर्वारिष्ट निवारणार्थे, भुक्तिमुक्तिसिद्ध्यर्थे सकल कामनासिद्ध्यर्थे श्री परमेश्वर प्रीत्यर्थे च पाठे विनियोगः।

ॐ नमो नीलकण्ठाय श्वेतशरीराय नमः। सर्पमःलाऽलंकृत भूषणाय नमः। भुजङ्ग परिकराय नागयज्ञोपवीताय नमः। अनेककालमृत्यु विनाशाय नमः। युग युगान्त काल प्रलय प्रचण्डाय नमः। ज्वलनमुखाय नमः। दंष्ट्राकराल घोररूपाय नमः। हुं हुं फट् स्वाहा। ज्वालामुख मन्त्र करालाय नमः। प्रचण्डार्क सहस्त्रांशु प्रचण्डाय नमः। कर्पूरामोदपरिमलाङ्ग सुगन्धिताय नमः। इन्द्रनील महानील वज्रवैडूर्य मणिमाणिक्य भूषणाय नमः। श्रीअघोरास्त्र मूलमन्त्राय नमः। ॐ ह्रां स्फुर स्फुर। ॐ ह्रीं स्फुर स्फुर। ॐ ह्रूं स्फुर स्फुर। अघोर घोरतनुरूपाय नमः। रथ रथ तत्र तत्र चट चट कह कह मद मद मदनदहनाय नमः। श्रीअघोरास्त्र मूलमन्त्राय नमः। ज्वलन मरणभय क्षय हुँ फट् स्वाहा। अनन्तघोर ज्वरमरणभय कुष्ठ व्याधि विनाशाय नमः। शाकिनी डाकिनी ब्रह्मराक्षस दैत्य दानव बंधनाय नमः। अपस्मार भूत वेताल कूष्माण्ड सर्वग्रह विनाशनाय नमः। मन्त्रकोष्ठ करालाय नमः। सर्वापद् विच्छेदाय नमः। हुँ हुँ फट् स्वाहा। आत्म मन्त्र सुरक्षणाय नमः। ॐ ह्रां ह्रीं ह्रूं नमो भूत डामर ज्वाला वश भूत द्वादश भूतानां त्रयोदश भूतानां पञ्चदशडाकिनीं हन हन दह दह नाशय नाशय।

एकाहिक द्व्याहिक चतुराहिक पञ्चाहिक व्याप्ताय नमः। आपादानत सन्निपात वातादि हिक्का कफादिकास श्वासादिक दह दह छिन्धि छिन्धि

श्रीमहादेव निर्मित स्तम्भन मोहन वश्याकर्षणोच्चाटन कीलन उद्वासन इति षट्कर्म विनाशाय नमः।

अनन्त वासुकि तक्षक कर्कोटक खड्गपाल विजय पद्म महापद्म एलापर्ण नाना नागान् कुलकादि विषं छिन्धि छिन्धि भिन्धि भिन्धि प्रवेशय प्रवेशय शीघ्रं शीघ्रं हुं हुं फट् स्वाहा।

वात ज्वर मरणभय छिन्न छिन्न हन हन भूतज्वर प्रेतज्वर पिशाचज्वर रात्रिज्वर शीतज्वर सन्निपातज्वर बालज्वर ग्रहज्वर कुमारज्वर तापज्वर ब्रह्मज्वर विष्णुज्वर महेशज्वर आवश्यकज्वर कामाग्निज्वर विषमज्वर मरीचिज्वरादि प्रथम दण्डधराय नमः।

परमेश्वराय नमः। आवेशय आवेशय शीघ्रं शीघ्रं हुं हुं फट् स्वाहा। चौर मृत्युग्रहव्याघ्रसर्पादिक विषभय विनाशाय नमः। मोहन मन्त्राणामाकर्षण मन्त्राणां परविद्या छेदन मन्त्राणां ॐ ह्रीं ह्रीं ह्रूं कुलि लीं लीं हुं क्षं कुं कुं हुं हुं फट् स्वाहा।

नमो नीलकण्ठाय नमः। दक्षाध्वरहराय नमः। श्रीनीलकण्ठाय नमः।

# ॥ अथ पार्थिव शिव पूजनम् ॥

पार्थिवशिव पूजन से मन्दिर निर्माण व मूर्ति प्रतिष्ठा का फल मिलता है। इस अक्षय पुण्य से नि:सन्तान को पुत्र की प्राप्ति होती है। अनेक तरह के कष्टों व अभिशाप से मुक्ति मिलती है। कष्ट प्रदान करने वाले ग्रह जन्म कुण्डली के कुयोग तथा कालसर्पादि दोष शान्त हो जाते हैं।

विशिष्ट कामना हेतु सवालक्ष शिवलिङ्ग का निर्माण किया जाता है। मध्य में प्रधानशिवलिङ्ग बड़ा बनाया जाता है। तथा साथ में शिवपरिवार भी बनाया जाता है।

प्रतिदिन १० हजार शिवलिङ्ग अङ्गुष्ठाकार के बनायें। प्रत्येक पर **"नमः शिवाय"** मन्त्र बोलकर गन्ध, अक्षत, पुष्प अलग अलग चढावें। नित्य विसर्जन कर नित्य नवीन शिवलिङ्ग बनायें।

श्रावण मास में नित्य एक हजार शिवलिङ्ग बनाकर उनका पूजन करें। सायंकाल में विसर्जन कर देवें।

प्रधान शिव के साथ आठ हजार शिव मूर्तियां आठों दिशाओं में रखकर पूजन करें। नवनाग पूजन भी वहीं उनके साथ करें। अशक्ति में एक हजार शिवलिङ्ग अवश्य बनायें।

अलग अलग वारों के अनुसार शिवलिङ्ग को किस आकृति में जमाया जायवे उसका उल्लेख तन्त्र ग्रन्थों में भी मिलता है।

श्रावण में चार या पाँच सोमवार आते हैं।

**प्रत्येक सोमवार को बनाये जाने वाले लिङ्गों का विवरण निम्न है -**

प्रथम सोमवार - २ नाग (प्रधान लिङ्ग एवं दूसरा अन्य)

द्वितीय सोमवार - ३ नाग (प्रधान लिङ्ग एवं दो लिङ्ग अन्य)

तृतीय सोमवार – ५ नाग (प्रधान लिङ्ग एवं चार चारों दिशाओं)

चतुर्थ सोमवार – ९ नाग (प्रधान लिङ्ग एवं आठ चारों दिशाओं)

यदि किसी श्रावण मास में ५ सोमवार आते हैं तो चतुर्थ सोमबार को ७ सर्प व पाँचवे को ९ सर्प बनायें। अथवा –

प्रथम सोमवार – १ नाग। द्वितीय सोमवार – २ नाग

तृतीय सोमवार – ३ नाग। चतुर्थ सोमवार – ५ नाग

पञ्चम सोमवार – ९ नाग

इसके अलावा अन्य वारों में सहस्त्रशिवलिङ्गों का इस प्रकार जमायें।

रविवार को गोलाकार। मङ्गलवार को त्रिकोणाकार। बुधवार को कूर्माकार या बाणाकार। गुरुवार को आयताकार चौकोर उसमें कुण्डली की रेखाओं की तरह आडे–तिरछे बनाकर १२ भागों में भी जमा सकते हैं। शुक्रवार को पञ्चकोण उसके बाहर अष्टदल उसके बाद १२ दल की आकृति में शिवलिङ्ग जमाये। शनिवार को धनुषाकार आकृति के शिवलिङ्ग सजायें।

इन सभी के रंगीन चित्र पुस्तक के प्रारम्भ में दिये गये हैं।

## ॥ अथ विधानम् ॥

पूर्व दिन शुद्ध स्थान, तालाब या नदी स्थल पर जायें। वहां पृथ्वी को जल, दुग्ध, गन्धादि से पूजनकर पार्थिव शिवलिङ्ग के निर्माण हेतु मिट्टी प्राप्त करने की याचना करें। दूसरे दिन शुद्ध मिट्टी लाकर उसे **''ॐ हराय नमः''** मन्त्र बोलते हुये हाथ से या सांचे से अङ्गुष्ठ प्रमाण (ढाई इंच) का शिवलिङ्ग बनायें। प्रधान शिव तथा शिव परिवार की मूर्तियाँ बड़ी बनायें।

**''ॐ शूलपाणये नमः''** से शिवलिङ्ग को पूजा पात्र में रखें।

इसके साथ गौरी, गणेश, नन्दी व कार्तिक की मूर्तियाँ रखें। आठों दिशाओं में शिव की विशेष अष्टमूर्ति बनायें। शिवलिङ्ग पर सर्पाकृति बनायें। अन्यलिङ्गों पर सर्पाकृति नहीं बनायें। गणेश को शिव के दक्षिण भाग में वामभाग में पार्वती व कार्तिक तथा सम्मुख (कुछ तिरछे) नन्दी का पूजन करें। शिवलिङ्ग की जलेहरी उत्तर की तरफ रहती है। नन्दी भी उत्तर में कुछ तिरछे रहते हैं।

**सङ्कल्प** – संवत्, मास, दिवस व स्थान का उल्लेख करते हुये सङ्कल्प करें – मम जन्म कुण्डल्यां स्थित कालसर्पादि दोष निवारणार्थे, सकल पाप क्षयार्थे,

सर्वविध शापादि सकलदुरितोप शमनार्थे, धर्म, अर्थ, काम, मोक्ष, पुत्रपौत्रादि सकल ऐश्वर्य प्राप्ति हेतवे श्रीपार्थिव शिवलिङ्ग पूजनं चाहं करिष्ये।

॥ ध्यानम् ॥

**ध्याये नित्य महेशं रजतगिरिनिभं चारुचन्द्रवतंसम् ।**
**रत्नाकल्पोज्ज्वलाङ्गं परशुमृगवराऽभीति हस्तं प्रसन्नम् ॥**
**पद्मासीनं समन्तात् स्तुतिममरगणै र्व्याघ्रकृत्तिं वसानम् ।**
**विश्वाद्यं विशवन्द्यं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम् ॥**

**प्राणप्रतिष्ठा मन्त्र – "ॐ आं ह्रीं क्रौं यं रं लं वं शं षं यं हं लं क्षं हौं हंसः शूलपाणे प्राणा इह प्राणा"**

**ॐ आं ह्रीं क्रौं यं रं लं वं शं षं यं हं लं क्षं हौं हंसः शूलपाणे जीव इह जीव स्थित।**

**ॐ आं ह्रीं क्रौं यं रं लं वं शं षं यं हं लं क्षं हौं हंसः शूलपाणे वाङ्मन चक्षु श्रोत्र घ्राण पाणि पदादिनि सर्वेन्द्रियाणि सुखं चिरं तिष्ठन्तु स्वाहा। ३ बार कहें।**

**ॐ शूलपाणे नमः इह तिष्ठो। इह प्रतिष्ठो भव। भो पिनाकधृक् इहतिष्ठ सन्निहतो वरादो भव। अत्रधिष्ठानं कुरु कुरु मम पूजां गृहाण। यावत् पूजां करोम्यहं तावदिहाधिष्ठानं कुरु कुरु स्वाहा।**

**ॐ पशुपतये नमः आसनार्थे पुष्पं समर्पयामि नमः।**

इसी प्रकार – **गं गणपतये नमः। ॐ गां गौर्यै नमः। स्वां कार्तिकेये नमः। ॐ नं नन्दीश्वराय नमः।**

मन्त्र द्वारा उनका आवाहन करें।

रुद्राभिषेक कर सभी का अर्चन करें।

आठों दिशाओं में शिव की अष्टमूर्तियों का पूजन करें।

**ॐ शर्वाय क्षितिमूर्तये नमः। ॐ रुद्रायअग्निमूर्तये नमः। ॐ भवाय जलमूर्तये नमः। ॐ उग्राय वायुमूर्तये नमः। ॐ भीमाय आकाशमूर्तये नमः। ॐ पशुपतये यजमानमूर्तये नमः। ॐ ईशानाय सूर्यमूर्तये नमः। ॐ महादेवाय सोममूर्तये नमः।**

तत्पश्चात् नवनाग का पूजन उनके साथ करें –

मध्ये – **अन्ताय नमः**। पूर्वे – **शेषाय नमः**। आग्नये – **वासुक्यै नमः**। दक्षिणे – **तक्षकाय नमः**। नैऋते – **कर्कोटकाय नमः**। पश्चिमे – **शंखपालाय नमः**। वायवे – **नीलाय नमः**। उत्तरे – **कबलाय नमः**। ईशाने – **महापद्माय नमः**।

सब देवताओं का तथा सहस्त्र शिवलिङ्गों का प्रत्येक पर '**नमः शिवाय**' बोलते हुये गन्धार्चन करें। धूप दीप नैवेद्य अर्पण करें। १०८ या १००८ बार '**नमः शिवाय**' मन्त्र जप करें। स्तुति करें।

**ॐ सर्वज्ञान प्रविज्ञान प्रदायैक महात्मने ।**
**नमस्ते देव देवेश सर्वभूत हिते रतः ॥**

**अनन्तकांति संभोग परमेश नमोस्तुते। अनन्तकान्ति सम्पन्न अनन्तासन संस्थित परापर परातीत उत्पत्ति स्थिति कारक सर्वार्थ साधनोपाय विश्वेश्वर नमोस्तुते। सवार्थ निर्मलाभोग सर्वव्याधि विनाशन योग योगि महायोगि योगश्वर नमोस्तुते।**

॥ फलश्रुति ॥

कृत्वालिङ्गं प्रतिष्ठां च ध्यात्व देवं सदाशिवम् ।
लिङ्गस्तवं महापुण्यं यः श्रृणोति सदा नरः ॥
नोत्पद्यते च संसारे स्थानं प्राप्नोति शाश्वतम् ।
पापकञ्चुक निर्मुक्तः प्राप्नोति परमं पदम् ॥

इसके बाद शिव के दक्षिण हस्त में कर्म समर्पण करें।

**ॐ गुह्याति गुह्य गोप्ता त्वं गृहाणास्मत् कृतं जपम् ।**
**सिद्धिर्भवतु मे देव त्वत् प्रसादान्महेश्वर ॥**

अब संहारमुद्रा से विसर्जन करें। निम्न मन्त्र पढें –

**ॐ गच्छ गच्छ महादेव गच्छ गच्छ पिनाकधृक् ।**
**कैलासादि पीठं गच्छन्तु यत्र तिष्ठति पार्वति ॥**

# ॥ अथ मनसा देवी स्तोत्रम् ॥

यदि सर्प भय हो, स्वप्न में काले सर्प दिखाई देते हों, कालसर्पजन्य दोष के लक्षण दिखाई देते हों तो मनसा देवी स्तोत्र का पाठ करें। मनसा देवी के कहने पर आस्तीक मुनी ने सर्पों की रक्षा की थी। मनसा देवी तथा नवनागों का ध्यान पूर्वक षोडशोपचार पूजन कर प्रार्थना करें।

॥ महेन्द्र उवाच ॥

देवी त्वां स्तोतुमिच्छामि साध्वीनां प्रवरां पराम् ।
परात्परां च परमां नहि स्तोतुं क्षयोऽधुना ॥
स्तोत्राणां लक्षणं वेदे स्वभावाख्यानतः परम् ।
न क्षमः प्रकृतिं वक्तुं गुणानां तव सुव्रते ॥
शुद्धसत्त्वस्वरूपा त्वं कोपहिंसाविवर्जिता ।
न च शप्तो मुनिस्तेन त्यक्तया च त्वयायतः ॥
त्वं मय पूजिता सा वी जननि च यथाऽदितिः ।
दयारूपा च भगिनी क्षमारूपा यथा प्रसूः ॥
त्वया मे रक्षिताः प्राणाः पुत्रद्वाराः सुरेश्वरी ।
अहं करोमि त्वां पूज्यां मम प्रीतिश्च वर्धते ॥
नित्यं यद्यपि पूज्या त्वं भवेऽत्र जगदम्बिके ।
तथाऽपि तव पूजां वैवर्धयामि पुनः पुनः ॥
ये त्वामाषाढसक्रांत्यां पूजयिष्यन्ति भक्तितः ।
पञ्चम्यां मनसाख्यायां मासान्ते वा दिने दिने ॥
पुत्रपौत्रादयस्तेषां वर्धन्ते च धनानि च ।
यशस्विनः कीर्तिमन्तो विद्यावन्तो गुणान्विताः ॥

ये त्वां न पूजयिष्यन्ति निन्दत्यज्ञानतो जनाः ।
लक्ष्मीहीना भविष्यन्ति तेषां नागभयं सदा ॥
त्वं स्वर्गलक्ष्मीः स्वर्गे च वैकुंठे कलाकला ।
नारायणांशो भगवान् जरत्कारुर्मुनीश्वरः ॥
तपसा तेजसा त्वां च मनसा ससृजे पिता ।
अस्माकं रक्षणायैव तेन त्वं मनसाभिधा ॥
मनसा देवितुं शक्ता चाऽऽत्मना सिद्धयोगिनी ।
तेन त्वं मनसादेवी पूजिता वंदिता भवे ॥
यां भक्त्या मनसा देवाः पूज्यन्त्यनिशं भृशम् ।
तेन त्वां मनसादेवीं प्रवदन्ति पुराविदः ॥
सत्त्वरूपा च देवी त्वं शश्वत्सर्वानषेवया ।
यो हि यद्भावयेन्नित्यं शतं प्राप्नोति तत्समम् ॥
इदं स्तोत्रं पुण्यबीजं तां संपूज्य च यः पठेत् ।
तस्य नागभयं नास्ति तस्य वंशोद्भवस्य च ॥
विषं भवेत्सुधातुल्यं सिद्धस्तोत्रं यदा पठेत् ।
पञ्चलक्षजपेनैव सिद्धस्तोत्रो भवेन्नरः ॥
सर्पशायी भवेत्सोऽपि निश्चितं सर्पवाहनः ॥

*॥ इति श्री ब्रह्मवैवर्तपुरणे महेन्द्रकृत मनसादेवी स्तोत्र सम्पूर्णम् ॥*

## ॥ अथ श्रीमनसादेवी नाम स्तोत्रम् ॥

॥ ॐ मनसा देव्यै नमः ॥

जरत्कारु जगद्गौरी मनसा सिद्धयोगिनी ।
वैष्णवी नागभगिनी शैवी नागेश्वरी तथा ॥
जरत्कारुप्रियाऽऽस्तीकमाता विषहरीति च ।
महाज्ञानयुता चैव सा देवी विश्वपूजिता ॥
द्वादशैतानि नामानि पूजाकाले च यः पठेत् ।
तस्य नागभयं नास्ति तस्य वंशोद्भवस्य च ॥

नागभीते च शयने नागग्रस्ते च मन्दिरे ।
नागक्षते महादुर्गे नागवेष्टित विग्रहे ॥
इदं स्तोत्रं पाठित्वा तु मुच्यते नात्रसंशयः ।
नित्यं पठेद् यः तं दृष्ट्वा नागवर्गः पलायते ॥
नागौधं भूषणं कृत्वा स भवेत् नागवाहनाः ।
नागासनो नागतल्पो महासिद्धो भवेन्नरः ॥

**क्षमापन -**

मन्त्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वरी ।
यत्पूजितं मया देवी परिपूर्ण तदस्तु मे ॥

**सङ्कल्प - अनेन ध्यानावाहनादि षोडशोपचारैः अन्योपचारेश्च पूजनेन अमृतरक्षिणी च मनसादेवी सहिताः अनंतादिनवनागाः प्रीयंताम्।**

मनसादेवी व नाग का पूजन कर नवग्रह हवन करें। अग्नि का बलवर्धिनी नाम से पूजन कर, मनसादेवी मन्त्र से हवन करें।

**होमक्रमः - बलवर्धनामाग्निं सम्पूज्य होमः कार्यः। ग्रहहोमं समाप्य।**

ग्रह होम के बाद मनसा मन्त्र से होम करें।

**मनसादेवी मन्त्र - ह्रीं तत्कारिणी विषहारिणी विषरूपिणी विषं हन इन्द्रस्य वज्रेण नमः स्वाहा।**

इस मन्त्र से द्रव्य से १०८ आहुति देवें तथा मनसा देवी के मन्त्र का होम करें। इसके पश्चात् नव नागों का उनके पृथक-पृथक मन्त्र से सङ्कल्प करके हवन करें। सर्पसूक्त का १०८ या १००८ बार हवन करें। व्याहृति होम करें। खीर की बलि देकर नागों प्रसन्न करें।

शनि को भी सर्प का प्रतीक माना है अतः शनि होम करके प्रार्थना करें-

प्रीतः शनैश्चरस्तस्य सर्वबाधान् व्यपोहति ।
दद्याद् सर्वसमृद्धि च पुत्रपौत्रादि सन्ततिम् ।
आयुष्यं दीर्घमारोग्यं सर्वत्र विजयं दिशेत् ॥

## ॥ अथ दुष्ट बाधाशमन प्रयोगा:॥

जिसकी कुण्डली में कालसर्प योग हो अथवा लग्न में सूर्य, चन्द्र से अथवा बृहस्पति से भी केन्द्र में पापग्रह (राहु, केतु, शनि, मङ्गल) होवे या उनसे षडाष्टक योग हो तो ऐसा व्यक्ति टोने-टोटके, प्रेतबाधा, पूर्वजन्म का शाप आदि योगों से ग्रसित रहता है।

स्वप्न में काले, डरावने या मृतात्माओं के दर्शन हो, तो ऊपरी बाधा पैशाचिक दोष या अभिचारकर्म, टोटकों के कारण उसको बाधायें रहती है।

इसके लिये कई तरह के उपाय है -

१. **पञ्चमुखी हनुमान कवच का पाठ करें।**

   सुन्दरकाण्ड या हनुमान चालिसा पढ़ने से रक्षा नही होगी। कवच का पाठ व हनुमान वडवानल स्तोत्र या अन्य उग्र प्रयोग करें।

२. **भैरव नामावली के पाठकर भैरव के लिये बलि प्रयोग करें। भैरव के साबर मन्त्रों के पाठ करें।**

   भैरव बलि हेतु सात्विक कर्म के अनुसार उड़द के पकोड़े, उड़द की मिठाई, (इमरती, कंगन) दही, सिन्दूर, नमकीन, पापड़, अदरक, किशमिश, गुड़ का पानी या ताम्बे के बरतन में दूध में गुड़ डालकर चढ़ावें।

   **मन्त्र - ह्रीं वं वटुकाय आपद् उद्धारणाय कुरु कुरु वटुकाय ह्रीं।**

## ॥ अथ वटुकभैरवाष्टोत्तरशतनाम स्तोत्रम्॥

(कालसंकर्षणातन्त्रे)

**विनियोगः - ॐ अस्य श्रीवटुकभैरवस्तोत्र मन्त्रस्य कालाग्निरुद्र ऋषिः। अनुष्टुप् छन्दः। आपदुद्धारक वटुकभैरवो देवता। ह्रीं बीजम्। भैरवीवल्लभः शक्तिः। नीलवर्णो दण्डपाणिरिति कीलकम्। समस्तशत्रुदमने समस्तापन्निवारणे सर्वाभीष्टप्रदाने च विनियोगः।**

ऋष्यादिन्यासः – ॐ कालाग्निरुद्रऋषये नमः शिरसि ॥१ ॥ अनुष्टुप्छन्दसे नमः मुखे ॥२ ॥ आपदुद्धारक वटुकभैरवदेवतायै नमः हृदये ॥३ ॥ ह्रीं बीजाय नमः गुह्ये ॥४ ॥ भैरवीवल्लभशक्तये नमः पादयोः ॥५ ॥ नीलवर्णो दण्डपाणिरिति कीलकाय नमः नाभौ ॥६ ॥ विनियोगाय नमः सर्वाङ्गे ॥७ ॥

मूलमन्त्रः – ॐ ह्रीं वं वटुकाय क्ष्रौं क्ष्रौं आपदुद्धारणाय कुरु कुरु वटुकाय ह्रीं वटुकाय स्वाहा।

यह मंत्र प्रेतादि उपद्रव शांति व शत्रुदमन में विशेष काम में आता है

॥ ध्यानम् ॥

नीलजीमूतसंकाशो जटिलो रक्तलोचनः ।
दंष्ट्राकरालवदनः सर्पयज्ञोपवीतवान् ॥१ ॥
दंष्ट्रायुधालंकृतश्च कपालस्त्रग्विभूषितः ॥
हस्तन्यस्तकरोटीको भस्मभूषितविग्रहः ॥२ ॥
नागराजकटीसूत्रो बालमूर्तिर्दिगंबरः ।
मंजुसिंजानमंजरि – पादकंपितभूतलः ॥३ ॥
भूतप्रेतपिशाचैश्च सर्वतः परिवारितः ।
योगिनीचक्रमध्यस्थो मातृमण्डलवेष्टितः ॥४ ॥
अट्टहासस्फुरद्वक्त्रो भृकुटीभीषणाननः ।
भक्तसंरक्षणार्थाय दिक्षु भ्रमणतत्परः ।
एवंभूतस्तु वटुको ध्यातव्यो भैरवीश्वरः ॥५ ॥
एवं ध्यात्वा स्तोत्रं पठेत् ।
ॐ ह्रीं वटुको वरदः शूरो भैरवः कालभैरवः ।
भैरवीवल्लभो भव्यो दण्डपाणिर्दयानिधिः ॥६ ॥
वेतालवाहनो रौद्रो रुद्रभ्रुकुटिसंभवः ।
कपाललोचनः कांतः कामिनीवशकृद्वशी ॥७ ॥
आपदुद्धारणो धीरो हरिणांकशिरोमणिः ।
दंष्ट्राकरालो दष्टौष्ठो धृष्टो दुष्टनिर्वहणः ॥८ ॥
सर्पहारः सर्पशिराः सर्पकुण्डलमण्डितः ।
कपाली करुणापूर्णः कपालैकशिरोमणिः ॥९ ॥

श्मशानवासी मांसाशी मधुमत्तोऽट्टहासवान् ।
वाग्मी वामव्रतो वामो वामदेवप्रियंकरः ॥१०॥
वनेचरो रात्रिचरो वसुदो वायुवेगवान् ।
योगी योगव्रतधरो योगिनीवल्लभो युवा ॥११॥
वीरभद्रो विश्वनाथो विजेता वीरवंदितः ।
भूताध्यक्षो भूतिधरो भूतभीतिनिवारणः ॥१२॥
कलंकहीनः कंकाली क्रूरः कुक्कुरवाहनः ।
गाढो गहन गम्भीरो गणनाथसहोदरः ॥१३॥
देवीपुत्रो दिव्यमूर्तिर्दीप्तिमान् दीप्तिलोचनः ।
महासेनप्रियकरो मान्यो माधवमातुलः ॥१४॥
भद्रकालीपतिर्भद्रो भद्रदो भद्रवाहनः ।
पशुपहाररसिकः पाशी पशुपतिः पतिः ॥१५॥
चण्डः प्रचण्डचण्डेशश्चंडीहृदयनन्दनः ।
दक्षो दक्षाध्वरहरो दिग्वासा दीर्घलोचनः ॥१६॥
निरातंको निर्विकल्पः कल्पः कल्पांतभैरवः ।
मदतांण्डवकृन्मत्तो महादेवप्रियो महान् ॥१७॥
खट्वांगपाणिः खातीतः खरशूलः खरांतकृत् ।
ब्रह्माण्डभेदनो ब्रह्मज्ञानी ब्राह्मणपालकः ॥१८॥
दिक्चरो भूचरो भूष्णुः खेचरः खेलनप्रियः ।
सर्वदुष्टप्रहर्ता च सर्वरोगनिषूदनः ॥१९॥
सर्वकामप्रदः शर्वः सर्वपापनिकृंतनः ।
इत्थमष्टोत्तरशतं नाम्नां सर्वसमृद्धिदम् ॥२०॥
आपदुद्धारजनकं वटुकस्य प्रकीर्तितम् ।
एतच्च श्रृणुयान्नित्यं लिखेद्वा स्थापयेद्-गृहे ॥२१॥
धारयेद्वा गले बाहौ तस्य सर्वाः समृद्धयः ।
न तस्य दुरितं किंचिन्न चोरनृपजं भयम् ॥२२॥
न चापस्मृतिरोगेभ्यो डाकिनीभ्यो भयं नहि ।

न कूष्माण्डग्रहादिभ्यो नापमृत्योर्न च ज्वरात् ॥२३॥
मासमेकं त्रिसंध्यं च शुचिर्भूत्वा पठेन्नरः ।
सर्वदारिद्यनिर्मुक्तो निधिं पश्यति भूतले ॥२४॥
मासद्वयमधीयानः पादुकासिद्धिमान् भवेत् ।
अञ्जनं गुटिका खड्गं धातुवादरसायनम् ॥२५॥
सारस्वतं च वेतालवाहनं बिलसाधनम् ।
कार्यसिद्धिं महासिद्धिं मन्त्रं चैव समीहितम् ॥२६॥
वर्षमात्रमधीयानः प्राप्नुयात्साधकोत्तमः ।
एतत्ते कथितं देवि गुह्याद्गुह्यतरं परम् ॥२७॥
कालसंकर्षणीतन्त्रे कलिकल्मषनाशनम् ।
नरनारीनृपाणां च वशीकरणमंबिके ॥२८॥

*॥ इति कालसंकर्षणतन्त्रोक्तवटुकाष्टोत्तरशतनाम स्तोत्रं समाप्तं ॥*

३. **दुर्गा सप्तशती को बगलामुखी, कालिका या प्रत्यङ्गिरा मन्त्र का सम्पुटित पाठ करें।**

४. **प्रत्यङ्गिरा स्तोत्र एवं प्रत्यङ्गिरा मन्त्र जप करें।**

यह देवी सिंहवाहना है। इनके मुँह से अग्नि ज्वाला निकलती है जो शत्रु बाधाओं को जलाकर नष्ट कर देती है।

**(क) ऐं ह्रीं श्रीं प्रत्यङ्गिरे माम रक्ष रक्ष मम शत्रून् भञ्जय भञ्जय फें हुं फट् स्वाहा।**

(ख) **ह्रीं यां कल्पयन्ति नोऽरय क्रूरां कृत्यां वधूमिव।**

**तां ब्रह्मणाप निर्णुद्म प्रत्यक् कर्तारमिच्छतु ॥**

यह मन्त्र शत्रु की क्रिया को वापस उसी पर लौटाता है।

५. **शरभराज मन्त्र** -

यह भगवान शिव का उग्ररूप है जिसने भगवान नृसिंह का गर्व नष्ट किया था।

**मन्त्र - खें खां खं फट्। प्राण ग्रहासि प्राणग्रहासि हुं फट्। सर्वशत्रु**

**संहारणाय शरभ शालुव पक्षिराजाय हुं फट्।**

६. **कुब्जिका प्रयोग** -

कालसर्प योग के कारण या शापित कुण्डली के कारण यदि बार-बार टोटके व प्रेतबाधा उत्पन्न होती है तो कुब्जिका देवी का ध्यान करें। यह देवी सभी नागों को अपने आभूषण रूप में धारण करती है। इससे कालसर्प जनित दोष शान्त हो जाता है।

**मन्त्र - ॐ गुह्यकुब्जिके हुं फट् मम सर्वोपद्रवान् यन्त्र मन्त्र तन्त्र विषचूर्ण प्रयोगादिकं येन कुतं कारितं कुरुते करिष्यति कारयिष्यति तान् सर्वान् हन हन दंष्ट्रा करालिनि हैं ह्रीं हूं गुह्यकुब्जिकायै स्वाहा ह्रौं ॐ खें वों गुह्यकुब्जिकायै नमः।**

॥ ध्यानम् ॥

**नीलोत्पलदल श्यामा षड्वक्त्रा षट्प्रकारिका ।**
**चिच्छक्तिरष्टादशाख्या बाहु द्वादश संयुता ॥**
**सिंहासनसुखासिना प्रेतपद्मोपरि स्थिता ।**
**कुलकोटि सहस्त्राढ्या कर्कोटो मेखलास्थितः ॥**
**तक्षकेणोपरिष्टाच्च गले हारश्च वासुकिः ।**
**कुलिकः कर्णयोर्यस्याः कूर्मकुण्डल मण्डलः ॥**
**भ्रुवोः पद्मो महापद्मो वामे नागः कपालकः ।**
**अक्षसूत्रं च खट्वाङ्गं शङ्खं पुस्तं च दक्षिणे ॥**
**त्रिशूलं दर्पणं खड्गं रत्नमालाऽङ्कुशं धनुः ।**
**श्वेतमूर्ध मुखं देव्या उर्ध्वश्वेतं तथाऽपरम् ॥**
**पूर्वस्यं पाण्डरं क्रोधि दक्षिणं कृष्णवर्णकम् ।**
**हिमकुन्देन्दुभं सौम्यं ब्रह्मा पादतले स्थितः ॥**
**विष्णुस्ते जघने रुद्रो हृदि कण्ठे तथेश्वरः ।**
**सदाशिवो ललाटे स्याच्छिवस्तस्योर्ध्वतः स्थितः ।**
**आधूर्णिका कुब्जिकैवं ध्येया पूजादिकर्मसु ॥**

कुब्जिका देवी के छः मुख, छह प्रकारिकायें,, १८ चिच्छक्तियां और १२ भुजायें हैं। इनका वर्ण नीलकमल के समान है। वे सिंहासन पर प्रेतासन पर स्थित

हैं। सहस्त्र करोड़ कुल से सम्पन्न है। मेखला में कर्कोटक नाग बंध हुआ है। ऊपर से तक्षक पड़ा हुआ है। गले में वासुकि सर्प का हार है, कानों में कुलिक सर्प है। कूर्म का कुण्डल बना हुआ है। भौंहों पर पद्म तथा महापद्म सर्प बैठे हैं। बाँये हाथ में कापालक नाग, अक्षसूत्र, अस्थिपञ्जर, शङ्ख तथा पुस्त है।

दाँये हाथ में त्रिशूल, दर्पण, खड्ग, रत्नमाला, अङ्कुश व धनुष धारण किये हुये हैं। उर्ध्वमुख एवं सम्मुख मुख श्वेत वर्ण का है। पूर्व दिशा का मुख पाण्डुरङ्ग और क्रोध युक्त है। दक्षिणदिशा का मुख काले रंग का और उत्तरदिशा का मुँह हिम, कुन्दपुष्प एवं चन्द्रमा के समान शुभ्रवर्ण है। ब्रह्मा उनके चरणों के नीचे, विष्णु जघनस्थल में, रुद्र हृदय में, ईश्वर कण्ठ में, सदाशिव मस्तक में तथा शिव उनके ऊपर स्थित है।

इनकी उपासना से दुर्योग जनित कष्ट दूर होते हैं। इस देवी की विशेष उपासना दीक्षा लेकर की जाती है। सामान्य व्यक्ति इस देवी का ध्यान कर मन्त्र को २१ पाठ नित्य करें।

## ॥ अथ कालसर्प दोष शान्ति प्रयोगा:॥

कालसर्प दोष शान्ति हेतु विशिष्ठ कर्म के कई अङ्ग हैं।

❖ सर्पयोग कारक राहु व केतु के ३१-३१ हजार जप करायें।

❖ सर्पमन्त्र के ३१००० जप करायें। नवनाग पूजा कराकर रुद्राभिषेक कराकर सर्प को बहते जल में प्रवाहित करायें।

❖ सर्पयन्त्र की आवरण पूजा करें। नागपाश यन्त्र की पूजा कर घर में शान्ति हेतु रखें।

❖ पुष्टिकर्म के लिये मृत्युञ्जय जप २५००० करायें।

❖ वंशवृद्धि कामना में शान्ति कर्म के पश्चात् षष्ठीदेवी की उपसना करें। इसकी उपासना से सन्तान की प्राप्ती होती है।

मन्त्र - **ह्रीं षष्ठीदेव्यै स्वाहा।**

शुक्लपक्ष की षष्ठी से चन्द्रबल देखकर, गुरु-शुक्र के उदय काल से करायें। मलमास में अनुष्ठान प्रारम्भ नहीं करें।

❖ परिवार के पितृ हेतु पिण्डदान, नागबलि, कर्म करें। पितृतर्पण करें तथा पितृसूक्त का पाठ करं। ये प्रयोग अगल से दिये गये हैं।

❖ पार्थिव शिवलिङ्ग पूजन, रुद्राभिषेक करें, सर्पपूजा करक सर्प का विसर्जन करें।

❖ ऋणयोग कारक ग्रहों का उपाय करें।

❖ दरिद्रता की देवी ज्येष्ठालक्ष्मी का पूजन कर उससेअपने घर को छोड़कर जाने की प्रार्थना करें।

❖ धूमावती देवी की उपासना की उसे सब दु:खों को लेकर चले जाने की प्रार्थना करें। इनका स्थाई निवास दरिद्रता देता है अत: पूजन के बाद विसर्जन करें।

मन्त्र - **धूं धूं धूमावती स्वाहा।**

- ❖ राहु-केतु के जप, स्तोत्र, कवच, अष्टोत्तरशत नामावलि का पाठ करें।
- ❖ नाग सहस्त्रनामावलि का पाठ कराकर हवन करें।
- ❖ मनसा देवी स्तोत्र, नवनाग स्तोत्र, उतङ्गमुनि कृत मृत्युञ्जय सहस्त्रनामादि के पाठ करने से भी दोष शान्ति होती है।
- ❖ नागपाश यन्त्र का पूजन करने से भी सर्पदाष की शान्ति होती है।
- ❖ पार्थेश्वर शिवलिङ्ग बनाकर उनका अर्चन करें। प्रत्येक वार के अलग अलग प्रयोग दिये गये हैं।

  श्रावण मास में नित्य एक हजार शिवलिङ्ग बनाकर प्रत्येक का शिव मन्त्रों से अर्चन करें। प्रत्येक वार को अलग अलग स्वरूप में उनको स्थापित करें। श्रावण मं ४-५ सोमवार आते हैं, उनके अलग अगल चित्र प्रारम्भ में दिये गये हैं।
- ❖ जो व्यक्ति अनुष्ठान का व्यय वहन नहीं कर सकते हैं वे स्वयं कुछ पाठ जपादि करें। शिव मन्त्र, मृत्युञ्जयमन्त्र, गरुडमन्त्र, राहुमन्त्र, नागस्तोत्र या सहस्त्रनामादि कर्म करते रहें।
- ❖ नागपञ्चमी (प्रत्येक शुक्ला पञ्चमी) को व्रत करें। नागपूजा करें, स्तोत्र पढ़ें, मनसा देवी का पूजन करें।
- ❖ जिस मन्दिर में शिवलिङ्ग पर सर्प चढ़ा हुआ नहीं हो वहां उसके परिमाप का ताम्बे का सर्प रुद्राभिषेक कराकर चढ़ायें।
- ❖ बुधवार को सर्प की अंगूठी, लोहा, ताम्बा या चान्दी की कनिष्ठा अंगुलि में या तर्जनी अंगुलि में दूध से धोकर राहु मन्त्र पढ़कर धारण करें।
- ❖ प्रक्येक बुधवार को उड़द या मूंग काले कपड़े में बांधकर किसी गरीब भिखारी को दान में देवें। ७२ बुधवार तक करें।
- ❖ पलाश के पुष्पों को गोमूत्र में भिगोकर सुखायें। पश्चात् उन्हें कूटकर चूर्ण बना लेवें। स्नान करते समय उस चूर्ण व तिल को पानी के पात्र में डाल लेवें। उससे स्नान करें।
- ❖ शिव मन्त्र का उच्चारण करते हुये एक वर्ष तक वट वृक्ष की परिक्रमा करें।

- भैरव की उपासना करें।
- जैन धर्म में पार्श्वनाथ, पद्मावती की आराधना करें।

## ॥ अथ नाग दिग्रक्षण विधानम् ॥

**( देवी रहस्ये )**

जिस व्यक्ति के हर कार्य में विघ्न आते हैं। व्यक्ति किसी कार्य या व्यापार हेतु घर से बाहर जाता हो और वह जिसे मिलने गया हो और वह व्यक्ति कुछ समय पूर्व ही अन्यत्र चला गया हो वहां नहीं मिले, रकम की उगाही करने जाये तो देनदार कुछ समय पूर्व ही रकम किसी अन्य को दे चुका हो अर्थात् वृथा भ्रमण या व्यय होवे तो ऐसे योग वाले व्यक्ति प्रातःकाल उठकर या यात्रा समय नाग दिग्रक्षण स्तोत्र का पाठ अवश्य करें। इससे आठों दिशओं का बन्धन होता है।

**ॐ वासुकिः पूर्वतः पातु नीलनागोऽनलेऽवतात् ।**
**तक्षको दक्षिणे पातु नैऋते पद्मनागकः ॥१॥**
**कर्कोटकः पश्चिमेऽव्यात् शङ्खपालस्तु वायुगे ।**
**कुलिकश्चोत्तरे पातु शेष ईशान मण्डले ॥२॥**
**ब्राह्मी ब्रह्ममुहुर्त्तेऽव्याद दिनादौ वैष्णवी मम ।**
**रुद्राणी पातु मध्याह्ने सायं पात्वपराजिता ॥३॥**
**निशादौ पातु कौमारी निशीथे चण्डिकाऽवतु ।**
**निशान्ते पातु वाराही सर्वदा नारसिंहिका ॥४॥**

## ॥ अथ नागपाश यन्त्र पूजनम् ॥

इस यन्त्र में सर्प का मुँह व पूंछ एक ओर दिखाया गया है। तथा नाग के शरीर से ८ प्रकार के वलय (गाँठे) बनायें है। मध्य भाग में प्रधान नाग अनन्त या कालीय की पूजा करें। आठों वलय में अन्य अष्टनागों की पूजा करें। पन्द्रह यन्त्र ४ स्थान पर हैं, उनमें हरगौरी तथा नवदुर्गा का पूजन करें।

**मुख पूजन्** - मुँह में राहु मन्त्र से पूजन करें।

ॐ कयानश्चित्र आभुवदूती सदावृधः सखा। कयाशचिष्ठयावृता।

ॐ भ्रां भ्रीं भ्रौं सः राहवे नमः।




**कालसर्प नागफास पूजन यन्त्रम्**

**पुच्छ पूजन** – पुच्छ में केतु का पूजन करें।

**ॐ केतुं कृण्वन्न केतवे पेशोमर्याऽअपेशसे। समुषद्भिरजायथाः।**

**ॐ स्त्रां स्त्रीं स्त्रां सः केतवे नमः।**

आठों वलय में ८ शिव मूर्ति तथा मध्य में त्र्यम्बक शिव का आवाहन करें।

**ॐ अर्कमूर्तय नमः। इन्द्रमूर्तये नमः। वसुधामूर्तये नमः। तोयमूर्तये नमः। वह्निमूर्तये नमः। वायुमूर्तये नमः। यजमानमूर्तये नमः। मध्ये – ॐ त्र्यम्बकाय नमः।**

पुनः अष्टरुद्रों के साथ शिव का पूजन करें।

**ॐ भवदेवाय नमः। ॐ सर्वदेवाय नमः। ॐ ईशानाय नमः। ॐ पशुपतये नमः। ॐ रुद्रदेवाय नमः। ॐ उग्रदेवाय नमः। ॐ भीमाय नमः। ॐ महान्ताय नमः।** मध्ये – **ॐ नमः शिवाय।**

पश्चात् अष्टवलय एवं मध्य में नवनाग का पूजन करें।

**ॐ अनन्ताय नमः। ॐ वासुकीये नमः। ॐ शेषाय नमः। ॐ पद्माय नमः। ॐ कम्बलाय नमः। ॐ शङ्खपालाय नमः। ॐ धृतराष्ट्राय नमः। ॐ तक्षकाय नमः। ॐ कालीयाय नमः।**

पन्द्रह यन्त्र के नवखण्डों में नवदुर्गा का पूजन करें।

**ॐ शैलपुत्र्यै नमः। ॐ ब्रह्मचारिण्यै नमः। ॐ चन्द्रघण्टायै नमः। ॐ कुष्माण्डायै नमः। ॐ स्कन्दमातायै नमः। ॐ कात्यायन्यै नमः। ॐ कालरात्र्यै नमः। ॐ महागौर्यै नमः। ॐ सिद्धिदात्र्यै नमः।**

पुनः मध्य में **हरगौरी** का आवाहन करके शेष अष्टकोष्ठों में शिव की **अष्ट शक्तियों** का आवाहन करें।

**मध्ये - ॐ गौरी सहिताय हरायनमः।**

शेष अष्टकोष्ठों में पूर्वादि क्रम स पूजन करें -

**ॐ ज्येष्ठाय नमः। ॐ श्रेष्ठाय नमः। ॐ रुद्राय नमः। ॐ कालाय नमः। ॐ कलविकरणाय नमो बलविकरणाय नमो। ॐ बलाय नमो बलप्रमथनाय नमो। ॐ सर्वभूतदमनाय नमो। ॐ मनोन्मयाय नमः।**

पश्चात् यन्त्र का पूजन करें, दुग्धाभिषेक करें। गन्ध, अक्षत, पुष्प, धूप, दीप, नैवेद्य अर्पण कर शिव की आरती करें।

## ॥ अथ नाग प्रधानपीठ पूजनम् ॥

मण्डप के मध्य में अष्टदल बनाकर बाहर नावगेष्टित १२ दल बनायें। चारों कोणों में चार कलश रखें। यह यन्त्र नवग्रह के ईशान में बनायें।

ईशान कलश में रक्तचन्दन, प्रियन्गु, मुस्ता, आमलक डालें। अग्निकोण के कलश में तीर्थोदक, पञ्चामृत व सप्तधान्य डालें। नैऋति कलश में सप्तमृत्तिका डालें। वायुकोण के कलश में वट, पीपल, उदुम्बर, आम, जामुन के पत्ते डालें। मध्य कलश में सतौषधी सतावर, सूंठी, सफेद सरसों डालें।

सभी कलशों में जल डालकर पूर्णपात्र से ढककर ऊपर श्रीफल रखें।

शान्ति स्तात्र,.जातवेदसूक्त, रक्षोघ्न सूक्त, पुरुषसूक्त से ईशानादि चारों कोणों में पजन करें। मध्य में **मृत्युञ्जय शिव** का आवाहन कर **रौद्रसूक्त** का पाठ करें।



ये सभी सूक्त पुस्तक में अलग से दिये गये हैं।

नागपीठ में मध्य मृत्युञ्जय शिव का ध्यान करें -

**हस्ताभ्यां कलशद्वयामृतरसै राप्लावयन्तं शिरो ,**
**द्वाभ्यां तौ दधतं मृगाक्षवलये द्वाभ्यांवहन्तं परम् ।**

**अङ्कन्यस्त करद्वाभ्याममृतघटं कैलासकान्तं शिवम् ,**
**स्वच्छाम्भोजगतं नवेन्दुमुकुटां भान्तं त्रिनेत्रं भजे ॥**

**ॐ हौं जूं सः ॐ भूर्भुवः स्वः ॐ त्र्यम्बकं यजामहे सुगंधिं पुष्टिवर्धनं उर्वारुकमिव बन्धनान् मृत्योर्मुक्षीय मामृतात् ॐ स्वः भुवः भूः ॐ सः जूं हौं ॐ॥**

**ॐ भूर्भुवः स्वः महामृत्युञ्जयाय इह आगच्छ इह तिष्ठ।**

यहीं पर ''मनसादेवी'' का आवाहन करें।

॥ मनसादेवी ध्यानम् ॥

**नारायणांशो भगवान जरत्कारुर्मुनीश्वरः ।**
**तपसा तेजसा त्वां च मनसा ससृजे पिता ।**
**अस्माकं रक्षणायैव तैन त्वं मनसाभिधा ॥**

**ॐ भूर्भुवः स्वः मनसा देव्यै इहागच्छ इहतिष्ठ।**

**ॐ अमृतरक्षणी मनसादेव्यै नमः।**

मण्डल के दक्षिण भाग (वायव्य कोण) में कालेवस्त्र पर उड़द रखकर कालपात्र (मटकी) रखें तथा मण्डल के वाम भाग (नैऋत्य कोण) में काले वस्त्रों पर तिल रखकर काली मटकी रखें।

॥ राहु पूजनम् ॥

वायव्य कोण में ध्यान करें।

**नीलाम्बरो नीलवपुः किरीटी कराल वक्त्र करवालशूली ।**
**चतुर्भुजश्चर्मधरश्च राहुः सिंहासनस्थौ वरदोस्तु मह्यम् ॥**
**वन्दे राहुं धूम्रवर्णं अर्धकायं कृताञ्जलिम् ।**
**विकृत्यास्यं रक्तनेत्रं धूम्रालङ्कारमन्वहम् ॥**

ॐ कयानश्चित्र ऽआभुवदूति सदावृधः सखा। कया शचिष्टया वृता॥

भो राहो इहागच्छ इह तिष्ठ वरदो भव ।

॥ केतु पूजनम् ॥

॥ ध्यानम् ॥

धूम्रो द्विबाहुवरदो गदाभृद्गृधासनस्थो विकृताननश्च ।
किरीट केयूर विभूषिताम्बरः सदास्तु मे केतुगणः प्रशान्तः ॥

**वन्दे केतुं कृष्णवर्ण कृष्णवस्त्र विभूषणम् ।**
**वामोरून्यस्ततद्धस्तं साभयेतर पाणिकम् ॥**
**ॐ केतुं कृण्वन्नकेतवे पेशोमर्य्या ऽअपेशसे। समुषद्भिरजायथा॥**
**भो केतु इहागच्छ इह तिष्ठ वरदो भव ।**

दुर्गासप्तशती में लिखा है -

**कालमृत्यु च सम्पूज्यो सर्वारिष्ट प्रशान्तये ।**

अत: काल-मृत्युका पूजन करें। राहु के साथ काल का पूजन करें -

॥ ध्यानम् ॥

**एह्येहि दंडायुध धर्मराज कालांजनाभास विशालनेत्र ।**
**विशाल वक्षस्थल रुद्ररूप गृहाण पूजां भगवन् नमस्ते ॥**
**चित्रगुप्तादि संयुक्त दण्डमुद्‌गरधारक ।**
**आगच्छ भगवान काल ( धर्म ) पूजार्थं सन्निधो भव ॥**
**कालाय कालरूपाय कालाञ्जन समप्रभो ।**
**दक्षिणस्यां कृतावास कालदेव नमोऽस्तुते ॥**
**ॐ कार्षिरसि समुद्रस्यं त्वा क्षित्वा उन्नयामि ।**
**समापो अद्भिभरग्मत समोषधी भिरोषधीः ॥**
**ॐ भूर्भुवः स्वः काल इहागच्छ इह तिष्ठ वरदो भव।**

॥ व्याधि एवं मृत्यु पूजन ॥

केतु के पास में व्याधि एवं मृत्यु का पूजन करें। अरिष्ट शान्ति हेतु मृत्युलाङ्गुल स्तोत्र पुस्तक में अलग से दिया गया है। अमुक के स्थान पर पीड़ित का उच्चारण करें।

॥ व्याधि ध्यानम् ॥

**त्रिपादं त्रिभुज भीमं त्रिमूर्द्धानं त्रिलोचनम् ।**
**कपालाढ्यं ज्वालास्य वक्त्र दंष्ट्रकम् ॥**
**सप्तशृङ्गं वसामाली चर्माम्बर धारिणम् ।**
**अशेषाङ्गे वृणोद्भूतं कृमिजाले समाकुलम् ।**
**वक्त्रानासं वृहत्स्कंधं क्षुधया पीडितोदरं ॥**
**वैरिणां देहमालिङ्गय भक्षयन्तं विकर्णकम् ।**

कलाय कुसुमनीलं महाव्याधिकरं शिवम् ॥

**मन्त्र** – ॐ नमो भगवते रुद्राय महाव्याधिकारिणे अमुकस्य सर्वपीड़ा निवारय निवारय स्वाहा।

॥ मृत्यु ध्यानम् ॥

रक्तास्यं भीमदंष्ट्र प्रकटित वदनं वक्रनासं कराब्जैः ।
शूलं पाशं कपालं फणिमुसल हलं वज्रखेटं वहन्तम् ॥
भीमकालाभ्रनीलं भृकुटित नयनं सैरिभ स्कन्धरूढम् ।
नानाभूतैः करालैः परिवृतमखिलं प्राणिकालं भजामि ॥

**मन्त्र** – ॐ नमो भगवते मृत्यवे यमाय सर्वजीव हरण कारणाय उग्राय दण्डहस्ताय ङ हैं अमुक जीव मृत्युपाशात् मुंचय मुंचय सर्वलोक भयङ्कराय वराभय प्रदय प्रदय सर्वारिष्ट नाशय नाशय आरोग्यं कुरु कुरु हैं हूं फट् स्वाहा।

(अमुक के स्थान पर पीड़ित का नाम उच्चारण करें।)

॥ सर्प पूजनम् ॥

मध्य कलश में सर्प का आवाहन करें –

ॐ नमोस्तु सर्पेभ्यो ये के च पृथिवी मनु ।
ये अन्तरिक्षे ये दिवितेभ्यः सर्पेभ्यो नमः ॥
एह्येहि नागेन्द्र धराधेश सर्वामरैर्वदन्ति, पादपद्म ।
नानाफणा मण्डल राजमान गृहाण पूजां भगवन् नमस्ते ॥

॥ नवनाग आवाहनम् ॥

अष्टदले

अनन्त – अनन्तं विप्रवर्गं च तथा कुंकुमवर्णकम् ।
सहस्त्रफण संयुक्तं तं देवं प्रणमाम्यहम् ॥
मध्ये – ॐ अनन्ताय नमः अनन्त आवाहयामि स्थापयामि।

शेष – विप्रवर्गं श्वेतवर्णं सहस्त्रफण संयुक्तम् ।
आवाहयाम्यहं देवं शेष वै विश्वरूपिणम् ॥
पूर्वे – ॐ शेषाय नमः। शेषं आवाहयामि स्थापयामि।

वासुकी - क्षत्रीयवर्गं पीतवर्णं फणैसप्तशतैर्युतम् ।
युक्तमुत्तुगकायं च वासुकीं प्रणमाम्यहम् ॥
आग्नयां - ॐ वासुक्यै नमः। वासुकीं आवाहयामि स्था.।

तक्षक - वैश्यवर्गं नीलवर्णं फणैः पञ्चशतैर्युतम् ।
युक्तमुत्तुंगकायं च तक्षकं प्रणमाम्यहम् ॥
दक्षिणे - ॐ तक्षकाय नमः। तक्षकं आवाहयामि स्थापयामि।

कर्कोटक- शूद्रवर्णं श्वेतवर्णं शतत्रयफणैर्युतम् ।
युक्तमुत्तुंगकायं च कर्कोटकं नमाम्यहम् ॥
नैऋते-ॐ कर्कोटकाय नमः। कर्कोटक आवाहयामि स्था.।

शङ्खपाल - शङ्खपालं क्षत्रियं च पीतं सप्तशतैः फणैः ।
युक्तमुत्तुंगकायं च शिरसा प्रणमाम्यहम् ॥
पश्चिमे - ॐ शङ्खपालाय नमः। शङ्खपालं आवाहयामि स्था.।

नील - वैश्यवर्गं नीलवर्णं फणैः पञ्चशतर्युतम् ।
युक्तमुत्तुंगकायं च तं नीलं प्रणमाम्यहम् ॥
वायव्ये - ॐ नीलाय नमः। नील आवाहयामि स्थापयामि।

कम्बलक- कम्बलं शूद्रवर्गं च शतत्रयफणैर्युतम् ।
आवायामि नागेशं प्रणमामि पुनः पुनः ।
उत्तरे - ॐ कंबलाय नमः। कंबलक आवाहयामि स्थापयामि।

महापद्म - वैश्यवर्गं नीलवर्णं पञ्चशतैर्युतम् ।
युक्तमुत्तुंगकायं च महापद्म नमाम्यहम् ॥
ईशाने - ॐ महापद्माय नमः। महापद्म आवाहयामि स्था.।

॥ द्वादश नागिनी देवता ॥

नाग के द्वारा १२ वलय बनाये हुये हैं। परिधि के समीप उनमें पूर्वादि क्रम से द्वादश नागशक्तियों का पूजन करें।

**ॐ जरत्कार्यै नमः। ॐ जगद्गौर्यै नमः। ॐ मनसादेव्यै नमः। ॐ सिद्धयोगिन्यै नमः। ॐ वैष्णव्यै नमः। ॐ नागभागिन्यै नमः। ॐ शैव्यै नमः। ॐ नागेश्वर्यै नमः। ॐ जरत्कारूप्रियायै नमः। ॐ आस्तीकमातायै नमः। ॐ**

विषहरायै नमः। ॐ महाज्ञानयुतायै नमः।

**कालीय नाग पूजन** – मध्य में कालीय नाग का पूजन करें।

कालीयो नाम नागसौ विषरूपो भयङ्करः ।
नारायणेन संपृष्टो दोषो क्षेमकरो भव ॥

ॐ भूर्भुवः स्वः कालीय सर्पाय नमः। आ. स्थाप.।

**नाग गायत्री मन्त्र** – ॐ नवकुल नागाय विद्महे विषदन्ताय धीमहि तन्नोः सर्प प्रचोदयात्।

॥ ध्यानम् ॥

अनन्तपद्म पत्राद्यं फणाननेकतोज्ज्वलम् ।
दिव्याम्बरधरं देवं रत्नकुण्डल मण्डितम् ॥१॥
नानारत्नपरिक्षिप्तं मुकुटं द्युतिरंजितम् ।
फणमणिसहस्त्रोद्यै रसंख्यै पन्नगोत्तमे ॥२॥
नानाकन्या सहस्त्रेण समन्तात्परिवारितम् ।
दिव्याभरणं दिप्ताङ्गं दिव्यचन्दन चर्चितम् ॥३॥
कालाग्निमिव दुर्धर्षतेजसादित्य सन्निभम् ।
ब्रह्माण्डाधार भूतं त्वां यमुनातीर वासिनम् ॥४॥
भजेऽहंदोष शान्त्यैत्र पूजये कार्यसाधकम् ।
आगच्छ कालसर्पाख्य दोषं मम निवारयः ॥५॥

आसनम् – नवकुलाधिपं शेषं शुभ्रकच्छप वाहनम्।
नानारत्न समायुक्तं आसनं प्रतिगृह्यताम्॥

पाद्यम् – अनन्त प्रिय शेषं च जगदाधार विग्रह।
पाद्यग्रहाणभक्तयात्वं काद्रवेय नमोस्तुते॥

अर्घ्यम् – काश्यपेयं महाघोरं मुनिभिर्वन्दित प्रभो।
अर्घ्यं गृहाण सर्वज्ञ भक्त्या मां फलदायक॥

अरचमीयम् – सहस्त्रफणरूपेण वसुधाधारक प्रभो।
गृहाणाचमनं दिव्यं पावनं च सुशीतलम्॥

पञ्चामृत स्नानम् – पञ्चामृतं गृहाणेदं पावनं स्वभिषेचनम्।

बलभद्रावतारेश क्षेमं कुरु मम प्रभो ॥

वस्त्रम् - कौशेय युग्मदेवेश प्रीत्या तव मयार्पितम् ।
पन्नगाधीश नागेन्द्र ताक्ष्र्यशत्रो नमोस्तुते ॥

यज्ञोपवीतम् - सुवर्ण निर्मितं सूत्रं पीतं कण्ठोपहारकम् ।
अनेकरत्न संयुक्तं सर्पराज नमोस्तुते ॥

## ॥ अथ यन्त्र आवरण पूजनम् ॥

गन्ध अक्षत् पुष्प संयुक्त कर अष्टदल में पूजन करें।

**प्रथरमावरणम्** - ॐ अनन्ताय नमः। ॐ शेषाय नमः। ॐ वासुकये नमः। ॐ तक्षकाय नमः। ॐ कर्कोटकाय नमः। ॐ शङ्खपालाय नमः। ॐ नीलाय नमः। ॐ कंबलाय नमः। ॐ महापद्माय नमः।

पुष्पाञ्जलि -

दयाब्धे त्राहि संसार सर्पमन्या शरणागतः ।
भक्त्या समर्पयेतुभ्यं प्रथमावरणम् ॥

जल छोड़कर कहे - "पूजिता तर्पिता सन्तुः"

**द्वितीयावरणम्** - ॐ कालभैरवाय नमः। ॐ कालदुर्दराय नमः। ॐ कालाय नमः। ॐ धरणीधराय नमः। ॐ फणाधराय नमः। ॐ फहारिणे नमः। ॐ सर्पगामिने नमः। ॐ जलधराय नमः। ॐ वक्रगतिने नमः। ॐ रौद्राय नमः। ॐ श्रीधरधारिणे नमः।

पुष्पाञ्जलि अर्पण करें -

अभिष्ट सिद्धिं मे देहि शणागत वत्सल ।
भक्त्या समर्पये तुभ्यं द्वितीयावरणार्चनम् ॥

जल छोड़कर कहे - "पूजिता तर्पिता सन्तुः"

**तृतीयावरणम्** - ॐ आदिकालाय नमः। ॐ महाकालाय नमः। ॐ गौरकालाय नमः। ॐ शक्तिकालाय नमः। ॐ वीरभद्राय नमः। ॐ कालनेत्राय नमः। ॐ सहजाय नमः। ॐ सावित्र्याय नमः। ॐ वारुण्यकुमाराय नमः। ॐ क्षेत्राय नमः। ॐ कपिलाय नमः। ॐ भैरवाय नमः। ॐ मुद्रिकाय नमः। ॐ सुविग्निवाय नमः।

**पुष्पाञ्जलि** - **अभिष्ट सिद्धिं मे देहि शणागत वत्सल ।**
**भक्त्या समर्पये तुभ्यं तृतीयावरणार्चनम् ॥**

जल छोड़कर कहे - "**पूजिता तर्पिता सन्तु:**"

**चतुर्थावरणम्** - **क्षां क्षीं क्षूं क्षैं क्षौं क्षः फट् स्वाहा। ॐ कालाय नमः। ॐ रूपकालाय नमः। ॐ सूर्यकालाय नमः। ॐ क्षयकालाय नमः। ॐ अन्तकाय नमः। ॐ यमाय नमः। ॐ धर्मराजाय नमः। ॐ मृत्यवे नमः। ॐ अन्तकाय नमः। ॐ वैवस्ताय नमः। ॐ सर्वभूतक्षयाय नमः। ॐ औदुंबराय नमः। ॐ दघ्नाय नमः। ॐ नीलाय नमः। ॐ परमेष्ठिने नमः। ॐ वृकोदराय नमः। ॐ चित्राय नमः। ॐ चित्रगुप्ताय नमः।**

**पुष्पाञ्जलि** - **अभिष्ट सिद्धिं मे देहि शणागत वत्सल ।**
**भक्त्या समर्पये तुभ्यं चतुर्थावरणार्चनम् ॥**

जल छोड़कर कहे - "**पूजिता तर्पिता सन्तु:**"

**पञ्चमावरणम्** - **ॐ दिव्यायै नमः। ॐ सुष्मायै नमः। ॐ रूपजायै नमः। ॐ रुद्रायै नमः। ॐ खेचरायै नमः। ॐ खेमलायै नमः। ॐ खेधूपायै नमः। ॐ सर्वतोमुख्यै नमः। ॐ भद्रायै नमः।**

**पुष्पाञ्जलि** - **अभिष्ट सिद्धिं मे देहि शणागत वत्सल ।**
**भक्त्या समर्पये तुभ्यं पञ्चमावरणार्चनम् ॥**

जल छोड़कर कहे - "**पूजिता तर्पिता सन्तु:**"

**षष्टमावरणम्** - **ॐ नीलकण्ठाय नमः। ॐ हाटकेश्वराय नमः। ॐ कश्यपाय नमः। ॐ आस्तिकाय नमः। ॐ कद्रूवे नमः। ॐ मनसायै नमः।**

**पुष्पाञ्जलि** - **अभिष्ट सिद्धिं मे देहि शणागत वत्सल ।**
**भक्त्या समर्पये तुभ्यं षष्ठमावरणार्चनम् ॥**

जल छोड़कर कहे - "**पूजिता तर्पिता सन्तु:**"

**सप्तमावरणम्** - **ॐ गुरवे नमः। ॐ परमगुरवे नमः। ॐ परात्परगुरवे नमः। ॐ परमेष्ठी गुरवे नमः।**

**पुष्पाञ्जलि** - **अभिष्ट सिद्धिं मे देहि शणागत वत्सल ।**
**भक्त्या समर्पये तुभ्यं सप्तमावरणार्चनम् ॥**

जल छोड़कर कहे - "**पूजिता तर्पिता सन्तु:**"

**अष्टमावरणम्** – (परिधि समीप की दशों दिशाओं में) **ॐ अणिमासिद्ध्यै नमः। ॐ महिमासिद्ध्यै नमः। ॐ लघिमासिद्ध्यै नमः। ॐ गरिमासिद्ध्यै नमः। ॐ प्राप्तिसिद्ध्यै नमः। ॐ इच्छासिद्ध्यै नमः। ॐ भुक्तिसिद्ध्यै नमः। ॐ प्राकम्यसिद्ध्यै नमः। ॐ अमितासिद्ध्यै नमः। ॐ वशितासिद्ध्यै नमः।**

**पुष्पाञ्जलि – अभिष्ट सिद्धिं मे देहि शणागत वत्सल ।**
**भक्त्या समर्पये तुभ्यं अष्टमावरणार्चनम् ॥**

जल छोड़कर कहे – "**पूजिता तर्पिता सन्तु:**"

**नवमावरणम्** – परिधि समीप इन्द्रादि दिक्पालों व उनके आयुधों का पूजन करें।

**ॐ इन्द्राय नमः। ॐ अग्नये नमः। ॐ यमाय नमः। ॐ नैर्ऋत्याय नमः। ॐ वरुणाय नमः। ॐ वायवे नमः। ॐ सोमाय नमः। ॐ ईशानाय नमः। ॐ ब्रह्मणे नमः। ॐ अनन्ताय नमः।**

पूर्वादिक्रमेण – **ॐ वज्राय नमः। ॐ शक्त्यै नमः। ॐ दण्डाय नमः। ॐ खड्गाय नमः। ॐ पाशाय नमः। ॐ अङ्कुशाय नमः। ॐ गदायै नमः। ॐ त्रिशूलाय नमः। ॐ पद्माय नमः। ॐ चक्राय नमः।**

**पुष्पाञ्जलि – अभिष्ट सिद्धिं मे देहि शणागत वत्सल ।**
**भक्त्या समर्पये तुभ्यं नवमावरणार्चनम् ॥**

जल छोड़कर कहे – "**पूजिता तर्पिता सन्तु:**"

इसके पश्चात् सर्प के अङ्ग देवताओं का पूजन करें।

**ईशाने – ॐ अमृत रक्षिणे मनसा देव्यै नमः।**

## ॥ अङ्गदेवता पूजनम् ॥

**ॐ सहस्त्रधारिण्यै नमः पादौ पूजयामि। ॐ अनद्याय नमः गुल्फौ पूजयामि। ॐ विषदन्ताय नमः जङ्घौ पूजयामि। ॐ मन्दगतये नमः जानू पूजयामि। ॐ कृष्णाय नमः कटिं पूजयामि। ॐ पित्रे नमः नाभिं पूजयामि। ॐ श्वेताय नमः उदरं पूजयामि। ॐ उरगाय नमः स्तनौ पूजयामि। ॐ कालिकाय नमः भूजौ पूजयामि। ॐ जम्बूकण्ठाय नमः कण्ठं पूजयामि। ॐ द्विजिह्वाय नमः मुखं पूजयामि। ॐ मणिभूषणाय नमः ललाटे पूजयामि। ॐ शेषाय नमः शिरं पूजयामि। ॐ अनन्ताय नमः सर्वाङ्ग पूजयामि।**

गन्धम् - कस्तूरी कर्पूर केसाढ्यं चागररक्तचन्दनम् ।
श्रीचन्द्राढ्यं शुभं दिव्यं गन्धं गृहाण नागाधिपते ॥

अक्षतान् - काश्मीर पंकलितप्राश्च शाललेमानक्षतान् शुभान् ।
पातालाधिपतये तुभ्यं अक्षतान् तं गृहाण प्रभो ॥

पुष्पम् - केतकी पाटलजाति चम्पकै वकुलादिभिः ।
मोगरै शतपत्रश्च पूजितो वरदो भव ॥

इसके पश्चात् धूप, दीप, नैवेद्य अर्पण करें।

नैवेद्यम् - नैवेद्यं गृहतां देव क्षीराज्य दधिमिश्रितम् ।
नाना पक्वान्न संयुक्त पायसं शर्करायुतम् ॥

ऋतुफल, ताम्बूल, दक्षिणा प्रदान कर पुष्पाञ्जलि प्रदान करें।

## राहु प्रार्थना

कायाहीनः महाशक्तिः ग्रसते शशिभास्करौ ।
सिंहकेयो महावीर्यो राहु प्रीतो भवेन्मम ॥
महाशिरा महावक्त्रो दीर्घदंष्ट्रो महाबलः ।
अतनुः चोर्ध्वकेशश्च पीडां हरतु मे शिखी ॥

## काल प्रार्थना

यमो निहन्ता पितु धर्मराजो वैवस्वतो दण्डधरश्च कालः ।
प्रेताधिपो दत्तकृपानुसारी कृतांत एतत् दशभिर्जपन्तिः ॥
धर्मराज महाकाय दक्षिणाधिपते नमः ।
रक्तेक्षण महाबाहो मम पीड़ां निवारय ॥

## सर्प प्रार्थना

ब्रह्मलोके च ये सर्पाः शेषनागपुरोगमाः ।
नमोस्तु तेभ्यः सुप्रीताः प्रसन्ना सतु मे सदा ॥
अनन्त संसारधर प्रियतां कालिन्दजा वासक पन्नगाधिपते ।
नमोस्मि मत्वा कृपणं हि हिमं रक्षस्व मां शङ्करभूषणेश ॥
एतैत सर्पाः शिवकण्ठाभूषा लोकोपकाराय भुवे वहन्तः ।
भूतैः समेता मणिभूषिताङ्गाः गृह्णीत पूजां परमा नमो वः ॥

# ॥ अथ नागमूर्ति प्रतिष्ठा विधानम् ॥

नागमूर्ति को शिवलिङ्ग पर अर्पण करें अथवा नाग पूजन, जप, विसर्जन हेतु काम में लेवें उसकी प्रतिष्ठा अवश्य कां।

पहले मूर्ति के घृत लगाकर तपायें। पश्चात् एक पात्र में रख कर दूध व जल की धारा देकर अग्न्युत्तारण करें।

मन्त्र -

**ॐ समुद्रस्यत्वाव कयाग्ने परिव्ययामसि। पावको अस्मभ्य ठं शिवोभव ॥१ ॥**

**हिमस्यत्वा जरायुणाग्ने परिव्ययामसि पावको अस्मभ्य ठं शिवोभव ॥२ ॥**

**प्राण प्रतिष्ठा** - मूर्ति के अङ्गुष्ठ का स्पर्श कर सर्प के जीव, प्राण, अङ्गों की कल्पना करें। यदि नवनाग की मूर्तियाँ है तो उनके अलग अलग नाम का उच्चारण करते हुये प्रतिष्ठा करें।

**मन्त्र - ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हं लं क्षं हंसः अमुक सर्पस्य प्राणा इह प्राणा।**

**ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हं लं क्षं हंसः अमुक सर्पस्य जीव इह जीव स्थिर।**

**ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हं लं क्षं हंसः अमुक सर्पस्य वाङ्मनः चक्षुः श्रोत्र जिह्वा घ्राण पाणी पदादीनि इहागत्य स्वस्तये सुखेन चिरं तिष्ठन्तु स्वाहा।**

इस मन्त्र को तीन बार पढें।

पश्चात् उन्हें विराजमान कर प्रतिष्ठा की भावना कर अक्षत् पुष्प छोडें।

**ॐ मनोजूतिर्जुसतामाजस्य बृहस्पतियज्ञमिमन्तो त्वरिष्ट यज्ञं ठं समीदमन्द दधातु विश्वेदेवा साऽइहमादयंता ॐ प्रतिष्ठा सुप्रतिष्ठा वरदो भव।**

यदि विसर्जन व पूजन हेतु नागों के जोडे बनाये हो तो नवनाग के साथ "**अमुक नाग सपत्निकाय**" कहकर प्रतिष्ठा करें।

**नागनाम** - अनन्त, शेष, वासुकी, पद्म, कंबल, कर्कोटक, तक्षक, शङ्खपाल, कालीय, शङ्ख, अश्वतरूप, नील, धृतराष्ट्र, कपिल इत्यादि का पूजन करें।

नव अथवा द्वादश नाग का विशेष पूजन होता है।

**नागगायत्री मन्त्र - ॐ नवकुलाय विघ्नेह विषदन्ताय धीमहि तन्नो सर्पः प्रचोदयात्।**

# ॥ अथ शिवो सर्पाऽर्पण विधानम् ॥

जिस शिव मन्दिर में शिवलिङ्ग पर सर्प चढ़ाया हुआ नहीं हो वहां सर्प का अर्पण करने से विशेष पुण्य मिलता है। उस पुण्य से सर्पदोष का क्षय होता है।

शिवलिङ्ग के परिमाप का सर्प बनवायें। गणपति, मातृका, नवग्रह पूजन करें, सर्प की प्राणप्रतिष्ठा करें। उसका पूजन करें तथा शिव का दुग्धाभिषेक, पञ्चामृताभिषेक करके ब्राह्मणों द्वारा रुद्रपाठ युक्त रुद्राभिषेक कराकर सर्प को शिव के कण्ठाकार में अर्पित करें।

पुण्यफल शिव को अर्पण करते हुये प्रार्थना करें –

**एह्येहि नागेन्द्र धराधरेश सर्वामरैर्वन्ति पादपद्म ।**
**नानाफणा मण्डलं राजमान गृहाण पूजां भगवन्नमस्ते ॥१ ॥**
**आशीविषसमोपेत नागकन्या विराजित ।**
**प्रसन्नो नागराजेन्द्र त्वं शिव सन्निधो भव ॥२ ॥**
**ब्रह्मलोके च ये सर्पाः शेषनागपुरोगमाः ।**
**नमोस्तु तेभ्यः सुप्रीताः प्रसन्ना सन्तु मे सदा ॥**
**विष्णुलोके च ये सर्पाः वासुकिप्रमुखाश्च ते नमोस्तु ।**
**रुद्रलोके च ये सर्पाः तक्षकप्रमुखास्तथा नमोस्तु ॥**
**अनन्तं वासुकिं शेषु पद्मनाभं च कंबलम् ।**
**शङ्खपाल धृतराष्ट्रं तक्षकं कालिकं तथा ॥**
**एतानि नवनामानि नागानां च महात्मनम् ।**
**सायंकाले पठेनित्यं प्रातः काले विशेषतः ।**
**तस्मै विषभयं नास्ति सर्वत्र विजयी भवेत् ॥**

पुनः प्रार्थना करें –

**एतैत सर्पाः शिवकण्ठभूषा लोकोकाराय भुवंवहन्तः ।**

**भूतैः समेता मणिभूषितांगाः गृह्णीत पूजां परमां नमो वः ॥**
**कल्याणरूपं फणिराजमग्र्यं नानाफणामण्डल राजमानम् ।**
**भक्त्यैगम्यं जनताशरण्यं यजाम्यहं नः स्वकुलभिवृद्धये ॥**

नाग गायत्री मन्त्र से प्रणाम करें -

**ॐ नवकुलाय विद्महे विषदन्ताय धीमहि तनो सर्पः प्रचोदयात् ॥**

**कर्म समर्पण - शिवकण्डभूणाय नागदेवता शिवशोभिताय मम कालसर्पदोष शान्ताय श्रीसदाशिवार्पणमस्तु ॥**

## ॥ अथ नवनाग स्तोत्रम् ॥

**अनन्तं वासुकिं शेषं पद्मनाभं च कम्बलम् ।**
**खङ्खपालं धृतराष्ट्रं तक्षकं कालियं तथा ॥१॥**
**एतानि नवनामानि नागानां च महात्मनाम् ।**
**सायंकाले पठेन्नित्यं प्रातःकाले विशेषतः ॥२॥**
**तस्मै विषभयं नास्ति सर्वत्र विजयी भवेत् ॥३॥**

## ॥ अथ सर्पसूक्तम् ॥

सार्पसूक्त का पठन नाग पञ्चमी, नाग पूजन व नाग विसर्जन के समय करें।

**ब्रह्मलोके च ये सर्पाः शेषनाग पुरोगमाः ।**
**नमोऽस्तुतेभ्यः सर्पेभ्यः सुप्रीताः मम सर्वदा ॥१॥**
**विष्णुलोके च ये सर्पाः वासुकिः प्रमुखादयः ।**
**नमोऽस्तुतेभ्यः सर्पेभ्यः सुप्रीताः मम सर्वदा ॥२॥**
**काद्रवेयाश्च ये सर्पाः मातृभक्ति परायणाः ।**
**नमोऽस्तुतेभ्यः सर्पेभ्यः सुप्रीताः मम सर्वदा ॥३॥**
**इन्द्रलोके च ये सर्पाः तक्षको प्रमुखादयः ।**
**नमोऽस्तुतेभ्यः सर्पेभ्यः सुप्रीताः मम सर्वदा ॥४॥**
**सत्यलोके य ये सर्पाः वासुकिना च रक्षिताः ।**
**नमोऽस्तुतेभ्यः सर्पेभ्यः सुप्रीताः मम सर्वदा ॥५॥**
**मलये चैव ये सर्पाः कर्कोटः प्रमुखादयः ।**

नमोऽस्तुतेभ्यः सर्पेभ्यः सुप्रीताः मम सर्वदा ॥६॥
समुद्रतीरे ये सर्पाः ये सर्पाः जलवासिनः ।
नमोऽस्तुतेभ्यः सर्पेभ्यः सुप्रीताः मम सर्वदा ॥७॥
रसातले च ये सर्पाः अनन्तादि महाबलाः ।
नमोऽस्तुतेभ्यः सर्पेभ्यः सुप्रीताः मम सर्वदा ॥८॥
सर्पसत्रे तु ये सर्पा आस्तिकेन च रक्षिताः ।
नमोऽस्तुतेभ्यः सर्पेभ्यः सुप्रीताः मम सर्वदा ॥९॥
धर्मलोके च ये सर्पाः वैतरण्यां समाश्रिताः ।
नमोऽस्तुतेभ्यः सर्पेभ्यः सुप्रीताः मम सर्वदा ॥१०॥
पर्वताणां च ये सर्पाः दरीसन्धिषु संस्थिताः ।
नमोऽस्तुतेभ्यः सर्पेभ्यः सुप्रीताः मम सर्वदा ॥११॥
खाण्डवस्य तथा दाहे स्वर्गं ये च समाश्रिताः ।
नमोऽस्तुतेभ्यः सर्पेभ्यः सुप्रीताः मम सर्वदा ॥१२॥
पृथिव्यां चैव ये सर्पाः ये च साकेतवासिनः ।
नमोऽस्तुतेभ्यः सर्पेभ्यः सुप्रीताः मम सर्वदा ॥१३॥
सर्वग्रामेषु ये सर्पाः वसन्ति सर्वे स्वच्छन्दाः ।
नमोऽस्तुतेभ्यः सर्पेभ्यः सुप्रीताः मम सर्वदा ॥१४॥
ग्रामे वा यदिवारण्ये ये सर्पाः प्रचरन्ति च ।
नमोऽस्तुतेभ्यः सर्पेभ्यः सुप्रीताः मम सर्वदा ॥१५॥

# ॥ अथ नाग सहस्रनामावली ॥

नाग सहस्र नामावलि का पाठ करें या एक एक नाग के नाम से गन्ध, अक्षत्, पुष्प, नैवेद्य चढ़ाकर प्रत्येक नाम मन्त्र से हवन करने से उत्तम लाभ होवे। कालसर्प दोष व सर्प भय नष्ट होवे। अकस्मात् लाभ होवे।

नाग सहस्र नामावलि से हवन करते समय नाम के साथ **स्वाहा** लगायें।

**विनियोग:** – **ॐ अस्य श्रीनागदेव सहस्रनाम मन्त्रस्य अग्निऋषिः, सर्वाणि छन्दः, तक्षो देवता, क्षं बीजं, ह्रीं शक्तिः, नृं हृदयम्, क्लीं कीलकं विषं इति अस्त्रम् अमृतं इति कवचं, अनन्तशेषतक्षकं इति परमो मन्त्रः श्री अनन्तादि नवकुल नागदेवता प्रीत्यर्थं कालसर्प दोष परिहारार्थं सहस्रनामभिः पुष्पार्पणे ( बिल्वार्पण, तुलसीदलार्पण ) विनियोगः।**

**ॐ अनन्ताय नमः।** (इसी प्रकार प्रत्येक नाम के पहले **ॐ** व अन्त में नमः लगावें।) **शेषाय., तक्षकाय., वासुकिये., शंखपालाय., महापद्माय., कंबलाय., कर्कोटकाय., कुलिकाय., फणिराज्ञे., स्थिराय., प्रभवे., भीमाय., प्रवराय., वरदाय., वराय., मणिमण्डलभूषिताय., सर्वात्मने., सर्वविख्याताय., सर्वस्मै., सहस्रपदे., गूढगुल्फाय., हेमजंधाय., दिगंबराय.,।**

**गंभीराय., वाताशनाय., उरगाय., कालीयाय., कम्बुकण्ठाय., विषकलाय., मणिभूषणाय., सुलक्षणाय., सर्वज्ञाय., भयाय., गरिम्णे., गर्विणे., सर्वांगाय., सर्वभावनाय., सर्वभूतहराय., वृत्तये., निवृत्तये., नियंताय., शाश्वताय., ध्रुवाय., भगवते., अर्हणाय., अभिवाद्याय., महाकर्मणे., उन्मत्ताय., प्रच्छन्नाय., पातालवासिने., महायशसे., महा- कायाय., पन्नगाय., शङ्करभूषणाय., अनन्तशिखिने., पातालवासाय., यशकर्त्रे., विश्वरूपाय., महाहनवे., लोकपालाय.।**

**अंतर्हितात्मने., प्रसाद्याय., पवित्राय., महते., नियमाय., नियमाश्रिताय.,**

यमुनान्तर्वासिने., विषग्रहाय., विषहन्त्रे., नागेन्द्राय., नागकन्या परिवृत्ताय., नागलोकाधिपतये., शौरये., अपराजिताय., स्वकर्मणे., सर्वभूताय., आवये., अविकाराय., निधये., सहस्राक्षाय., विशालाक्षाय., शनवे., केतवे.,ग्रहाय., ग्रहपतये., कालघ्ने., विश्वरूपिणे., विश्वात्मने., जगत्पतये., सर्वभूतात्मने.,।

सर्वेश्वराय., चञ्चलाय., चपलाय., महाबलाय., उत्कंठाय., अंबुजाय., अहिर्बुध्न्याय., आह्निककर्मणे., अमितविक्रमाय., अपराजिताय., अश्वदाय., अग्निनेत्राय., अग्निवपुषे., अत्रिपुत्राय., अनघाय., आदिनाथाय., साधकाय., मन्त्राय., योगिने., योज्याय., महाबीजाय., महारेतसे., महाबलाय., सर्वज्ञाय., सुबीजाय.।

बीजवाहनाय., भूपतये., विश्वरूपाय., स्वयंश्रेष्ठाय., बलाधीशाय., अबलाय., अट्टाहासाय., अनाकुलाय., अघनाशिने., अनघाय., अप्सुनिलयाय., अर्हाय., अष्टमूर्तये., अनिर्विण्णाय., अचंचलाय., अष्ट- दिक्पालमूर्तये., अन्तकराय., गणाय., गणकर्त्रे., कामाय., सर्वभावकराय., सुरूपाय., तेजसे., तेजस्करनिधये., उदग्राय.।

दीर्घाय., हरिकेशाय., सुतीर्थाय., सिद्धार्थाय., सर्वशुभकराय., अरूपाय., अनन्तरूपाय., अभयंकराय., अक्षराय., अभ्रवपुषे., अव्ययाय., अनादि-निधनाय., अघशत्रवे., अमराविघ्ने., हर्त्रे., अनादये., अनुत्तमाय., अह्ने., अमोघाय., बहुरूपाय., कपर्दिने., ऊर्ध्वरेतसे., सेनापतये., विभवे., अहश्चराय.।

नक्तं चराय., निम्नमन्यवे., सुवर्चसाय., गजघ्ने., दैत्यघ्ने., कालाय., लोकधाम्ने., गुणकराय., सिंहशार्दूलरूपाय., कालयोगिने., महानादाय., सर्वकामाय., निशाचराय., बहुधराय., स्वर्भानवे., गतये., नित्यप्रियाय., नित्यनर्ताय., नर्तकाय., सर्वलालसाय., घोराय., नित्याय., गिरिसहायाय., अनभसे., विजयाय.।

व्यवसायाय., अतीन्द्रियाय., अघर्षणाय., घर्षणात्मने., कामनाशकाय., सुसहाय., मध्यमाय., तेजोपहारिणे., बलदात्रे.। २००

भूरिदाय., अर्थाय., अवराय. गरलाशाय., गंभीराय., गंभीरबलवाहनाय., बृहत्कर्णस्थितये., सुतीक्ष्णदशनाय., महाकार्याय., महाननाय., अहायाय., अमृताय., अघोरवीर्याय., अवृंगाय., अविघ्नाय., अमिततेजसे., अतिवंद्याय., अष्टाङ्गन्यासरूपाय., अनिलाय., अवशाय., अनावरणीयाय., तीक्ष्णतापाय., सहाय., कर्मकालविदे., समुद्राय.।

वडवामुखाय., हुताशनसहायाय., प्रशान्तात्मने., हुताशनाय., उग्रतेजसे., जन्याय., विजयकालविदे., ज्योतिषाम्नायाय., सिद्धये., सर्वविग्रहाय., शिखिने., ज्वालिने., मूर्तिदाय., भुजङ्गाय., बलिने., तेजस्विने., शङ्खाय., पद्माय., अश्वतराय., धृतराष्ट्राय., पणविने., कालियाय., कपालाय., तालिने., खलिने.।

कालात्मकवंटकाय., नक्षत्रविग्रहमनसे., गुणबुद्धये., भावाय., अनामयाय., प्रजापतये., विश्ववाहवे., विभावाय., सर्वगाय., विमोदनाय., सुराख्याय., हिरण्यकवचधराय., भेदभंजकाय., बलहारिणे., महीचारिणे., अशोकाय., अनुकूलाय., अमिताशनाय., अरण्यनासिने., अप्रभावाय., अनलाय., स्नुवाय., सर्वतुर्यविनाशिने., सर्वतापपरिग्रहाय., व्यालरूपाय.।

गुहावासिने., गुहाय., मालिने., तरंगविदे., अनिर्देश्यवपुषे., अहोरात्राय., अमृत्यवे., अकारादिहकारान्ताय., अनिमिषाय., अस्वरूपाय., अग्रण्याय., महिषाय., विकालदृगे., सर्वकर्मबंधविमोचनाय., असुरेन्द्राणां बंधनाय., युधि शत्रुविनासिने., सांख्यप्रसादाय., दुर्वाससे., सर्वशत्रुनिषेविताय., प्रस्कन्दनाय., विभागशयाय., अनुकूलाय., अप्रथिताय., असंख्येयाय., अन्नपतये.॥ ३००॥

अमृतपतये.,अजिताय., यज्ञांगविदे., सर्वचारिणे., दुर्वासहृदये., वासनाय., सर्ववासाय., हेमांगाय., अमराय., धरोत्तमाय., लोहिताय., महाज्ञानाय., विजयाय., विशाखाय., सर्वकामदाय., सर्वकालप्रसादाय., सुबलाय., बलारूपधृगे., अपांनिधये., अपांपतये., असुरघातिने., अमरप्रियाय., अधिष्ठानाय., अरविन्दप्रियाय., अरविन्दवदनाय., अष्टसिद्धिदाय.,।

संग्रहाय., निग्रहाय., मुख्याय., अमुख्याय., सर्वोपरिनिवासनाय., देहाय., सर्वकामवराय., महावेगाय., वसुव्रेगाय., सुवर्चस्विने., बहुरश्मने., अंशवे., रौद्ररूपाय., अवशाय., जितात्मने., आकाशनिर्विरूपाय., सर्वज्ञाय., निशांपतये., अतिदीप्ताय., सहस्रदाय., मनोवेगाय., सर्ववासिने., श्रद्धावासिने., अकाराय., उपवेशकराय.।

आत्मभिदे., संलग्नाय., अनन्तशयाय., अनन्तब्रह्माण्डपतये., अशिवविनाशाय., अतिभूषणाय., अविद्याधराय., सिद्धसाधनाय., महर्षये., सिद्धयोगिने., दक्षिणाय., प्राच्यै., यशसे., अर्थकराय., अव्ययाय., भावनाय., कामाय., उन्मादाय., भिक्षवे., विषयाय., मृदवे., महीसैन्याय., विशाखाय., षष्ठिभागाय., रिपुभिदे.,

चतुरस्तंभाय., वृत्तावृत्तकराय., ताल्घ्नाय., मधवे., अतिप्रियाय.,

अकल्मषाय., अकलयाय., अतुलितबलाय., अचलरूपाय., अघोराय., अक्षोभ्याय., अलक्ष्मीनाशकाय., मधुकलाय., वाचस्पतये., वाजसेनाय., आश्रमपूजिताय., ब्रह्मचारिणे., लोकचारिणे., विचारविदे., सर्वचारिणे., अतिसुन्दराय., मनोहराय., अद्वैताय., अमितप्रभवाय. ॥४०० ॥

अवनिपतये., अपवर्गप्रदाय., कालाय., निशाचारिणे., पिनाकधृषे., विभिन्नस्थाय., नन्दिने., नन्दिकराय., अर्चिष्मते., निमित्ताय., नन्दनाय., अघहारिणे., विरंचिने., विश्ववरदाय., ज्ञानरूपाय., विश्वचक्षुषे., जगन्मायिने., महाकालाय., विद्यनिधये., अमदाय., गजरूपाय., सत्यधराय., सुराधीशाय., समस्तसाक्षिणे., संसाराय. त्रिलोकाय.।

अमोघविक्रमाय., पुष्टाय., वक्रगतये., कान्तिदाय., कामरूपिणे., काम-योगिने., कमलाक्षाय., शुद्धाय., दीर्घतुण्डाय., सुराध्यक्षाय., योगाध्यक्षाय., बीजाध्यक्षाय., बलाय., इतिहराय., निशाकराय., दलाय., अह्नाय., वेदर्भाय., भारवर्जिताय., आपदाय., गणप्रियाय., गणप्रियसुहृदे., गणविहरणानित्याय., गणप्रतीतिवर्धनाय., अतिधूम्राय.।

गणगर्वपरिहर्त्रे., गणप्रवृत्तमानसाय., महाश्रूलाय., अग्निज्वालाय., महा-घोराय., महामेघवासिने., अमरमर्दनाय., भयङ्कराय., नैष्काराय., अभयदात्रे., बहुप्रसादाय., अनागताय., गोत्रार्तिनाशिने., गोत्रप्रियाय., गोत्रपतये., गोपद-प्रियाय., गौतमाय., अविनाशाय., गौतमामृत्युपरिहाराय., गौतमीतीर्थदाय., गौतमार्तिसंहारिणे., महायशदार्त्रे., महाकायाय., सर्ववह्निमणिप्रियाय, सुवर्णाय.।

कुलवर्णाय., महागर्भपरायणाय., महाकालाय., उत्सर्गाय., लघवे., महा-ग्रीवाय., शरण्याय., सिद्धसेनाय., अव्यग्राय., गणाध्यक्षाय., गणसाध्याय., गणनायकाय., ज्योतिश्चराय., सिद्धवेदाय., लीलासेविताय., पूर्णाय., परम-सुन्दराय., नित्याय., कवये., लोककर्मिणे., महाकर्त्रे., अनौषधाय., परब्रह्मणे., कालपतये. ॥५०० ॥

नीतये., अनीतये., शुद्धात्मने., स्वस्तिभावाय., स्वस्तिदाय., शूरमदाय., दिव्यपापघ्नाय., भक्तकल्पाय., कल्याणगुरवे., सहस्त्रशीर्षे., निरविग्रहाय., शोभनाय., अंगलुब्धाधाय., नीलाय., वर्चस्विने., हविषे., गणभूतये., गणवल्लभाय., मूतर्य., गणसर्वस्मै., गणप्राणाय., गणस्तुताय., भागकराय., भामिने., कलिनाशनाय., महायोगिने.।

महात्मने., भुवनेश्वराय., भूतभव्याय., भाविताात्मने., भूतनिकराय.,

शरण्याय., वरेण्याय., सुसंयुक्ताय., परद्राणाय., प्रीतात्मने., महाबुद्धये., प्राप्तबाणाय., गरिष्ठदृशे., गौरकीर्तये., गौरिप्रणयाय., गौरिवरप्रदाय., गौरि-प्रियाक्षाय., गौरीशनन्दनाय., मनोवाञ्छितसिद्धकृते., महामूर्ध्ने., महानेत्राय., महान्तकाय., महाहनवे., महानासाय., महाग्रीवाय.।

अन्तरात्मने., बभ्रुवाहनाय., आनन्दितमनसे., कृतमङ्गलाय., कपर्दिने., प्रचण्डवेगाय., सुमनसे., धर्मवरुणाय., समायुक्ताय., कृतिनांवराय., आस्य-दंतपंक्तये., श्रेष्ठाय., कारुणिकाय., बोधकाय., समलोकज्ञाय., सर्पराज्ञे., संजीवनाय., जीवनाय., जगज्जीवाय., जगत्पतये., गणैकनेत्रे., गानपराय., गानयज्ञाय., गानसिंघवे., गानभूषणाय.।

गानसमुद्राय., गानाङ्गज्ञानदृगे., गानभूतये., गानोत्सुकाय., महाभूताय., महादिव्याय., महाद्रष्ट्रे., महाकृताय., महामायाय., मायातत्त्वय., गतश्रमाय., ज्ञानविज्ञानसम्पन्नाय., गानश्रवणलालसाय., गानयज्ञाय., गानप्रणयवते., गानध्यात्रे., गानगुणिने., विश्वप्रियाय., संविभागिने., कल्पकर्त्रे., कल्याणकराय., परावराय., परावज्ञाय., समास्थाय., अर्थप्रदाय. ॥६००॥

देवाधिपतये., मेरुधाम्ने., मण्डलिने., वायुवाहनाय., अनलाय., स्नेहाय., अस्नेहाय., अर्हिताय., महामुनये., गंधर्वाय., विद्वत्तमाय., विधये., पतंगाय., गतिप्रियाय., सर्वदमनाय., भावितात्मने., दीर्घक्रोधाय., आलोककृते., नाभये., आशुवेगाय., अध्ययनाय., कालपूजिताय., कालाय., कालिकाय., यज्ञाय.।

यज्ञसमाहिताय., कीर्तिकराय., वरुचिने., परंतापाय., अमरश्रेष्ठाय., समु-दाचाराय., तमोघ्ने., अंतःकरणाय., प्रमतनिद्राय., भूतेशाय., गगनस्थाय., जीवानन्दाय., अग्नये., ध्रुवाय., वरुणपाशाय., जगत्स्वामिने., कंचनवृद्धाय., कनकाय., उपकाराय., अभिगम्याय., अमोघाय., प्रशमाय., ऋजु- पादभुजाय., सगणाय., वीर्यनिधये.।

असंगगामिने., सुरकार्यज्ञाय., सुरश्रेष्ठाय., सुरपतये., वयसांपतये., संप्रतापनाय., भूमिजनकाय., अनिमिषगतये., सर्वपूजिताय., कवीशाय., कपिलाय., अंबुजाय., विश्वकर्मभूतये., जलेशयाय., महाक्रोधाय., अनुकांक्षिणे., पराय., अपराय., सर्वाङ्गरूपाय., मायाविने., सत्यशस्त्राय., विश्वेदेवाय., अनिलयाय., अलौकिकाय., सर्वतोमुखाय,।

प्रणताय., कालानिलद्युतये., सुखसम्पदाय., जगतामादिकारणाय., महेन्द्रमित्राय., सर्वपतये., सर्वशत्रुनिवारणाय., सर्वकल्याणभाजनाय.,

वैश्रवणाय., सर्वाशयाय., पुण्यसंचयाय., अतिशांताय., महागर्भाय., उरुगाय., दीर्घलोचनाय., समायुक्ताय., लोकेशाय., अलोकेशाय., वेद- निलयाय., प्रकृतिस्थिताय., हरिप्रियाय., मोक्षाधारनिकेतनाय., राजाधिराजाय., विद्याधराय., विषादधुने ॥७०० ॥

सर्वोपाधिस्थितिकराय., स्वाहास्वधावेदाधिकाराय., विघ्नदात्रे., सुगन्ध-प्रियाय., धर्मप्रवर्तकाय., वेदप्रतिष्ठाय., सर्वप्राणपतये., सुखकराय., सर्वरत्नविदे., जगत्कालस्थानाय., लोकहिताय., कवचांगाय., सर्वभूत- वादिने., सर्वभूतनिलयाय., दिव्यजनमनोहराय., मायामुक्ताय., अधिदेवाय., पुराणप्रभवे., सत्त्वात्मने., सप्तसागराय., सत्यविदे., सत्त्वसाराय., सत्य- ध्यानप्रियाय., संतापनाशनाय., सर्वनिर्णयाय.।

सर्वसाक्षिणे., बहुलानन्दवर्धनाय., अव्यक्तपुरुषाय., परमात्मने., परात्परविनिर्मुक्ताय., सत्यप्रकाशात्मने. भावकरणाय., भयसन्तापनाशनाय., प्रत्यक्ब्रह्मसनातनाय., प्रमाणविगताय., प्रत्याहारिनियोजकाय., प्रणवाय., प्रणवातीताय., परमात्मने., प्रबोधकाम्नाधाराय., संस्थिताय., यज्ञाय., आवेदनीयाय., सर्वसंघसुखाय., तारणाय., कलाधिपतये., परात्पराय., चराचरविकासकृते., विश्वप्रणवकृते., नमस्कारप्रियाय.।

युगादिकरणाय., वेदशास्त्राय., जातवेदसे., जगद्धृते., कांन्तये., संयोग-वर्धनाय. गुणाधिकवृद्धाय., नित्यतृप्ताय., सुवर्णविज्ञात्रे., आवर्तमानवपुषे., वसुश्रेष्ठाय., अङ्गिरसयोगिने., निर्जीवाय., निधनाय., महार्णवाय., पण्डिताय., मदपाय., युगरूपाय., युगकराय., अधियोगाय., धर्मकर्म- प्रभावकृते., आधारभूताय., धनधान्यसमृद्धिने., सन्तापसंहर्त्रे., मनोवाञ्छित दायकाय.।

कालाभयनन्तरूपाय., मुनिवरनमस्कृताय., सामन्यधनपूजिताय., समाराधनाय., भक्तदुःखक्षयकराय., भवसागरतारकाय.,विसर्गाय., सकलाध्यक्षाय., सुमुखाय., सर्वयुद्धाय., सुखजाताय., सर्वकर्मोत्थानाय., अप्रमेयपराक्रमाय., दिव्यचैतन्याय., देवानां परमागतये., परंधाम्ने., परंसुखाय., व्यवसायफलप्रदे., योगमायाधराय., परंतपसे., योगारीन्- प्रकाशाय., योगपातालाय., सत्यविद्यानमस्काराय., जगन्मोहनाय ॥८०० ॥

इडानाड़ीस्वरूपाय., मरणदुःखविमोचनाय., कृपासिंधवे., कल्पद्रुम निषेविताय., चिन्तामणिप्रियाय., चिन्तासागरवारणाय., चिन्तामणि विभूषिताय, कुण्डलिने., विकृताय., सर्वाश्रयकामाय., ऊर्ध्वसंहताय., सर्वदेवमयाय.,

सर्वलोककृते., एकाय., एकांतिकाय., नानाभाव विवर्जिताय., पूर्णविषाय., नानारूपधराय., प्राणपञ्चकनिर्मुक्ताय., कवि पञ्चकवर्जिताय., निर्वाणाय., निष्कालाय., निष्प्रपञ्चाय., निराश्रयाय., निष्ठासर्वज्ञाय.।

संसारश्रमनाशकाय., दूरत्वपरिनाशाय., प्रत्यक्चैतन्यगर्भाय., आरोग्य सुखदाय., अनन्तविक्रमाय., जितसिंधवे., जयप्रदाय., जनानन्दाय., जगत्पापनाशनाय., तीर्थसेविने तीर्थवासिने., तीर्थनीरनिवासकराय., तपोनिष्ठाय., तपोधनसमाश्रयाय., त्रैलोक्यवशकराय., दारिद्रनाशकाय., दुःखसागर भन्जनाय., कृष्णपिंगलाय., कृष्णवर्णाय., ऊर्ध्वगात्मने., अनन्तरूपाय., स्वयंभुवे., अतितेजसे., जगद्पालकाय., धर्मवर्धनाय., अमृताय.।

उपद्रष्ट्रे., वेदसिद्धान्तवेद्याय., पुरातनाय., तापत्रयनिवारकाय., संसार तमनाशकाय., सङ्कल्पदुःखदहनाय., तापसोत्तमवंदिताय., ब्रह्म प्रकाशात्मने ब्रह्मविद्याप्रकाशनाय., सर्वभावविदिताय., वरेण्याय., महाप्रसादाय., प्रयतात्मने., साध्यर्षये., सर्वसुसङ्कल्प विस्तारणाय., सूक्ष्मात्मने., सर्व साधारणाय., प्रधानधृगे., जीवसञ्जीवनाय., परिक्रमाय., महाभीमाय., सर्वभावविनिःसृताय., अंतःशून्याय., बहिःशून्याय., शून्यात्मने,।

शून्यभावनाय., अंतःपूर्णाय., अनन्तपूर्णाय., अन्तर्योगिने., अन्तर्निष्ठाय., बाह्यांत र्विमुक्ताय., कालकालाय., कैवल्याय., निगमाश्रयाय., युक्त सद्गतये., प्रजाजीवाय., संख्यासमाय., पर्यटनपराय., आयनिर्गमाय., निर्वाणाय., मोक्षकराय., विविक्ताय., भावाय., असंवेदिने., अनाश्रयारंभाय., देहधर्म विदितात्मने., सर्वकामफलप्रदाय., सर्वकामनिवर्तकाय ॥९०० ॥

सर्वकामफलाश्रयाय., जगद्वपुषे., मालासप्तप्रवर्तकाय., संशयार्क वशंकराय., फलदात्रे., फलेश्वराय., फलिरूपाय., फलिगर्भाय., बुद्धसार निर्वाणकाय., शङ्करप्रियाय., भयनाशकाय., महावताराय., भारभृते., भुवन भयाय., देवासुरगणाश्रयाय., देवासुरनमस्कृताय., परागतये., देवासुर गणाधिपतये., देवासुरगुरवे., विश्रामाय., आत्मसंभवाय., माननीयाय., मूर्ताय., मत्तमातङ्गविक्रमाय., मर्मज्ञाय.।

मन्दारकुसुमप्रियाय., यशस्याय., यशोराशये., योगकर्त्रे., योगपालनाय., राजमण्डलप्रतिष्ठाय., रक्षोघ्ने., वसुधापालकाय., वायुजीवाय., वायुबीजाय., विश्वकराय., शरणाश्रयाय., शोभनाय., सुदर्भाय., अमराय., पिलुशाय., सर्वदेवाय., सुरगणाय., अभिरामाय., सर्वपावनाय., वज्रिणे., शान्तिदात्रे.,

शान्तिरक्षकाय., षट्चक्रभेदनकराय., सज्जनप्रियाय.।

सर्वपापप्रमोदकराय., सर्वसाधनाय., नियमवर्धनाय., सिद्धभूताय., भक्तानां सुखदे., परमागतये., सर्वानां नमस्कृताय., सर्वयशस्वरूपाय., क्षेमप्रदाय., स्थावरपतये., वराय., ब्रताधिपाय., श्रीवर्धनाय., सकलात्मने., पूज्याय., सहस्त्ररूपाय., परसंवेदनात्मकाय., स्वानुसंधानाय., भोगमोक्ष कलाप्रदाय., सागराय., योगिहृदयविश्रामाय., आदिदेवाय., रसातलस्थिताय., शुद्धाय.।

सर्वव्याधिनिवारकाय., दुःखस्वप्ननाशकाय., सौम्याय., विषबाधा विनाशकाय., वीर्यातिशयसंयुक्ताय., नागराज्ञे., धर्मधारकाय., भक्तेष्ट दाननिरताय., प्रसन्नात्मने., पुरातनाय., अनन्तनाम्ने., सुमनसे., रसातल समाश्रिताय., वायुभक्षिणे., धराशायिने., धर्माऽधर्मविवेचकाय., पुत्रदाय., कीर्तिदाय., सत्याय., भक्तानामभयङ्कराय., सौभाग्यदाय., सदासेव्याय., ज्ञानमार्गप्रदीपकाय नमः ॥१००१॥

*॥ इति श्री नाग सहस्त्र नामावलि ॥*



# ॥ श्री राहुतन्त्रम् ॥

## ॥ राहुकाल समय निर्णय ॥

राहुकाल की मान्यता दिन में ही हैं रात्रि में नहीं है। अतः दिनमान के आठ भाग कीजिये उन आठ चौघड़ियों की गणना इस प्रकार करे। रविवार को ८ वां (४.३० से ६बजे) सोम को दूसरा (७.३० से ९ बजे) मंगल को ७ वां (३ से ४.३०तक) बुध को ५ वां (१२ से १.३० तक) गुरु को छठा (१.३० से ३ तक) शुक्र को चौथा (१०.३० से १२ बजे) शनि को तीसरा (९ से १०.३० तक) चौघड़िया राहुकाल का होता हैं। यह समय ६ बजे सूर्योदय व ६ बजे सूर्यास्त के हिसाब से लिखा हैं। दिन छोटे बड़े होते रहते हैं अतः सूक्ष्मगणना पूरे दिनमान के अनुसार करे।

## राहु का जन्म

श्रीमद्भागवत् महापुराण के अनुसार दैत्यराज राहु का जन्म वैप्रचित दैत्य कुल में भरणी नक्षत्र में हुआ। उसकी माता का नाम सिंहीका था। सिंहीका होलीका की बहन व भक्त प्रहलाद की बुआ थी। राहु के सौ भाई थे। सिंहीका के गर्भ से एक फणी (भारी फन वाला) वाले नाग के रूप में राहु का जन्म हुआ। राहु एक इच्छाधारी नाग था। वह अपने शरीर को किसी भी रूप में परिवर्तित कर लेता था।

सागर मन्थन के समय भगवान विष्णु ने कूर्मावतार धारण कर मन्दराचल पर्वत को धारण किया। वासुकि नाग को उससे लपेटा गया। उस नाग के फन को दानवों ने व पुच्छ के हिस्से को देवताओं ने पकडा। सागर मन्थन में सभी वस्तुओं के साथ अमृत भी निकला। उस अमृत को पीने के लिये देवताओं व दानवों में लड़ाई शुरु हो गई। तब भगवान विष्णु ने मोहिनी रूप धारण करके सुझाव दिया कि एक कतार में देवता व दूसरी कतार में दानव बैठें, वे दोनों को बारी बारी से अमृत का पान करायेंगी।

सभी ने उनका यह सुझाव मान लिया। भगवान विष्णु छल से देवताओं को अमृत पान करा रहे थे तथा मोहित दानवों को नहीं। राहु यह बात समझ गया। वह दानवों की कतार से उठ कर देवता का रूप धारण कर, देवताओं की कतार मे बैठ गया। भगवान ने उसे देव समझ कर अमृत पान करा दिया। किन्तु तुरन्त ही यह बात उनके समझ में आ गई। उन्होनें राहु का सिर अपने सुदर्शन चक्र से काट दिया। राहु तो अमृत पी चुका था। अत: उसका धड़ व शिर अलग हो गये। परन्तु दोनों ही जीवित रहे।

इस प्रकार धड़ का नाम केतु व शिर का नाम राहु हो गया। केतु संभवत: आश्लेषा नक्षत्र में हुआ। राहु एक इच्छाधारी सर्प था इसलिये राहु-केतु के योग को सर्प योग भी कहते हैं। तथा राहु का भरणी नक्षत्र व केतु का आश्लेषा नक्षत्र है जिनका स्वामी ''काल'' व ''सर्प'' होने से कालसर्प योग कहलाता है।

राहु का वाहन सिंह तथा केतु का वाहन मत्स्य है। महाभारत भीष्म पर्व के अनुसार राहु ग्रह मण्डलाकार होता है।

**नागवीथि** - अश्विनी, भरणी, कृत्तिका यह तीनों नक्षत्र अन्तरिक्ष के जिस खण्ड में रहते है उसे ''नागवीथि'' कहते हैं।

**तिथियाँ** - सर्प को पञ्चमी तिथि तथा काल को दशमी तिथि का अधिष्ठाता कहा गया है।

## राहु की विशेषताएं

राहु विद्युत शक्ति का कारक है। अत: बीजली की चोरी व बिजली के सामान की चोरी नहीं करनी चाहिये, इससे राहु का ऋण बढ़ता है एवं व्यर्थ खर्चा बढ़ता है एवं परेशानी प्राप्त होती है।

विभिन्न तरह के शाप, पितृशाप, मातृशाप, भ्रातृशाप, गुरुशाप, पत्निऋण आदि राहु से देखे जाते हैं।

राहु शुभ होता है तो प्रतापी, शत्रुहंता एवं बलवान होवे। यह अशुभ हो तो राजा से रङ्क एवं शुभ होने पर रङ्क से राजा बना देता है।

ऋषि पाराशर कहते हैं कि राजयोग प्राप्ति के बाद व्यक्ति अहंकारी निरङ्कुश एवं कपटी भी हो सकता है।

शुभ राहु **सुरपति व देवांश योग** बनाता है।

**सुरपति योग** – पाँचवें राहु, चन्द्र मङ्गल दूसरे या तीसरे स्थान में होने से यह योग महाधनी बनाता है। उच्च पद भी देता है।

**देवांश योग** – राहु दशवें, शनि लाभ में हो एवं उन पर नवमेश की दृष्टी हो तो राज योग बनता है।

**अन्य योग इस प्रकार है –**

- जातक के राहु मङ्गल साथ हो, तो आक्रामक व हिंसक होता है।
- राहु बुध साथ हो तो जातक वणिज बुद्धि वाला हो। ऐसा भी अनुमान है कि ऐसा व्यक्ति पिछले जन्म में साधु-सन्त हो तो बाद में गृहस्थ जीवन अपनाया या अपनी शिष्या से सम्पर्क बनाये।
- राहु सूर्य युति, पिता को कष्टकारक हो, स्वयं के कार्यों में विघ्न आये।
- राहु चन्द्र योग से व्यक्ति कल्पना अधिक करे लाभ कम होवे।
- राहु बृहस्पति योग से व्यक्ति किसी का उपकार नहीं माने। वह व्यक्ति नास्तिक, गुरु, ब्राह्मण का द्वेषी भी हो सकता है।
- राहु शुक्र वाला जातक विलासी हो, पत्नि शाप का अवलोकन करना चाहिये।
- राहु शनि युति वाला व्यक्ति पूर्व जन्म में अमीर रहा होगा। गरीबों व कर्मचारियों का शोषण किया होगा। किसी की आत्मा को दुःख पहुँचाया होगा। जिसके दुष्परिणाम इस जन्म में भोगने पड़ेगे।
- राहु के कारण जातक तन्त्र मन्त्र, बुरी आत्माओं से भी प्रभावित रहता है।
- राहु के कारण मिथ्याभाषी, दुराचारी, कपटी व स्वार्थी एवं नास्तिक भी होता है। अधिक परेशानी के कारण निराशावादी भी हो जाता है।
- चोरी, डकैती, किसी का बुरा सोचने का आदि हो जाता है।
- गैस, धुँआ, गैस चेम्बर, विद्युत, बम का सम्बन्ध भी राहु से है।
- वायर लैस, टेलीविजन, टेलीफोन, गड़ा हुआ धन, वीरान महल अपराधियों की शरण स्थली का सम्बन्ध भी राहु से है।
- पारिवारिक, सामाजिक, धार्मिक, राजनैतिक अथवा नैतिक सम्बन्धों को नकारने में जातक गर्व अनुभव करता है।

- ❖ जुआ, सट्टा, मदिरा, माफिया, दुर्व्यसनों का राहु से सम्बन्ध है।
- ❖ राहु का वाहन व्याघ्र है, वह भी क्रोधी जानवर होने से व्यक्ति क्रोधी व हिंसक हो जाता है।
- ❖ लाल किताब में राहु को हाथीमाना है जो बिगड़ने पर अपने स्वामी को भी मार देता है। राहु शुभ होने पर राजयोग देता है।
- ❖ राहु स्वयं सम्बन्धित ग्रह से कार्य करवाता है। जबकि केतु सम्बन्धित ग्रह को निर्देश देता है।
- ❖ राहु सर्प है एवं सर्प को चन्दन अधिक प्रिय है अतः पूजा में चन्दन का अवश्यप्रयोग करें।-
- ❖ राहु को शुभ करने हेतु विवाह सही उम्र (१८-२५) तक हो जाना चाहिये।

## राहु नक्षत्रों में जन्में जातक के रोग

**आर्द्रा नक्षत्र** - इस नक्षत्र में जन्मने वाले को स्नोफीलिया, श्वांस, पित्तवाली खाँसी, कण्ठ विकार, उदर रोग, यकृत की खराबी, वाणी, गले की खराबी आदि रोग होते हैं।

**स्वाति नक्षत्र** - इस नक्षत्र जन्मने वाले को आमवात, एलर्जी, त्वचा, गुर्दे सम्बन्धी रोग, कब्ज, मूत्र विकार, मधुमेह, भगन्दर, बवासीर, दुष्टव्रण, वृद्धावस्था में रोग शीघ्र प्रकट होते हैं।

**शतभिषा नक्षत्र** - बचपन में पेट की शल्य चिकित्सा, तिल्ली रोग, पीलिया, सन्निपात, विषम ज्वर, पिण्डलियों में दर्द, पसीना अधिक आना, रक्तचाप, तलवों व हथेली में जलन, नेत्र रोग आदि परेशानी होती है।

## राहु-केतु नक्षत्रों के स्वामी-स्थान

| नक्षत्र | स्वामी | निवास स्थान |
|---|---|---|
| अश्विनी | अश्विनी कुमार | दाँतों का ऊपरी भाग |
| मघा | पितृ | होठ |
| मूल | राक्षस | कुक्षि |
| आर्द्रा | शिव | आखें |

| | | |
|---|---|---|
| स्वाति | वायु | हृदय |
| शतभिषा | वरुण | दाईं जङ्घा |

## ॥ अथ राहुवैदिकमन्त्रप्रयोगः॥

**राहुमंत्रः**- ॐ कया नश्चित्रऽआभुवदूतीसदाव्वृधःसखा कयाशचिष्ठ यावृता ॥८ ॥

**विनियोगः**- ॐ कयान इति मन्त्रस्य वामदेव ऋषिः। गायत्रीछन्दः। राहुर्देवता। कयान इति बीजम्। शचिरिति शक्तिः। राहुप्रीत्यर्थे जपे विनियोगः॥

**ऋष्यादि न्यासः**- ॐ वामदेव ऋषये नमः शिरसि ॥१ ॥ ओं गायत्रीछन्दसे नमः मुखे ॥२ ॥ ओं राहुदेवतायै नमः हृदये ॥३ ॥ ओं कयान इति बीजाय नमः गुह्ये ॥४ ॥ ओं शचिरिति शक्तये नमः पादयोः ॥५ ॥ विनियोगाय नमः सर्वाङ्गे। इति ऋष्यादिन्यासः।

**करन्यासः**- ओं कयान इत्यङ्गुष्ठाभ्यां नमः ॥१ ॥ ओं चित्र इति तर्जनीभ्यां नमः ॥२ ॥ ओं आभुव इति मध्यमाभ्यां नमः ॥३ ॥ ॐ दूतीसदावृध इत्यनामिकाभ्यां नमः ॥४ ॥ ॐ सखाकया इति कनिष्ठिकाभ्यां नमः ॥५ ॥ ॐ शचिष्ठयावृता इति करतलकरपृष्ठाभ्यां नमः ॥६ ॥ इति करन्यासः।

**हृदयादि न्यास**- ॐ कयान इति हृदयाय नमः ॥१ ॥ ॐ चित्र इति शिरसे स्वाहा ॥२ ॥ ॐ आभुव इति शिखायै वषट् ॥३ ॥ ॐ दूतीसदावृध इति कवचाय हुं ॥४ ॥ ॐ सखाकया इति नेत्रत्रयाय वौषट् ॥५ ॥ ॐ शचिष्ठयावृता इत्यस्त्राय फट् ॥६ ॥

**मंत्रन्यास**- ॐ कया शिरसि ॥१ ॥ ॐ न इति ललाटे ॥२ ॥ ॐ चित्र मुखे ॥३ ॥ ॐ आभुव दूती नाभौ ॥४ ॥ ॐ सदावृधः कट्याम् ॥५ ॥ ॐ सखा ऊर्वोः ॥६ ॥ ॐ कया जानुनोः ॥७ ॥ ॐ शचिष्ठया गुल्फयोः ॥८ ॥ ॐ वृता पादयोः ॥९ ॥ इति मन्त्रन्यासः।

एवं न्यासं कृत्वा ध्यायेत्।

॥ अथ ध्यानम् ॥

**नीलांबरो नीलवपुः किरीटी करालवाक्त्रः करवलशूली।**
**चतुर्भुजश्चर्मधरश्च राहुः सिंहासनस्थो वरदोस्तु मह्यम् ॥१ ॥**

इति ध्यात्वा मानसोपचारैः संपूज्य जपं कुर्य्यात्।

राहोरष्टादशैव तु १८००० इति दूर्वासमित्तिलपायसघृतैर्दशांशहोमः। अन्यत्सर्वं पूर्ववत्।

॥ अथ दानद्रव्याणि ॥

**गोमेदरत्नं च तुरंगमश्च सुनीलचैलामलकंबलं च ।**
**तिलाश्च तैलं खलु लोहमिश्रं स्वर्भानवे दानमिदं वदंति ॥१॥**

*॥ इति राहुमन्त्रजपप्रयोगः ॥*

## ॥ राहु तांत्रिक मंत्राः ॥

**१ षडक्षर मंत्रः- रां राहवे नमः।**

इस मंत्र के ऋषि ब्रह्मा। छन्द गायत्री। देवता राहु। है।

**२ सप्ताक्षर मंत्रः- ॐ रां राहवे नमः।**

ऋषि ब्रह्मा। छन्द पंक्ति। देवता राहु। बीज रां। शक्ति वेशः।

॥ ध्यानम् ॥

वन्दे राहुं धूम्रवर्णं अर्धकायं कृताञ्जलिम् ।
विकृत्यास्यं रक्तनेत्रं धूम्रालङ्कारमन्वहम् ॥

**दशाक्षर मंत्र - ॐ सां सीं सौं रां राहवे स्वाहा।**

**अन्यच्च - ॐ भ्रां भ्रीं भ्रौं सः राहवे नमः।**

**॥ यंत्रार्चनम् ॥**




षटकोण एवं भूपूर युक्त यंत्र बनाये। मध्य में राहु का पूजन करें। षट्कोण हृदयादि देवताओं का पूजन करें।

**प्रथमावरणम्** - (षट्कोणे) **ॐ रां हृदयाय नमः। ॐ रीं शिरसे स्वाहा। ॐ रूं शिखायै वषट्। ॐ रैं कवचाय हुं। ॐ रौं नेत्रत्रयाय वौषट्। ॐ रः अस्त्राय फट्।**

**द्वितीवारणम्** – भूपूर में इन्द्रादि लोकपालों का पूजन करें!

**ॐ इन्द्राय नमः। ॐ अग्नये नमः। ॐ यमाय नमः। ॐ नैऋतिये नमः। ॐ वरुणाय नमः। ॐ वायवे नमः। ॐ कुबेराय नमः। ॐ ईशानाय नमः। ॐ ब्रह्मणे नमः। ॐ अनन्ताय नमः।**

**तृतीयावरणम्** – भूपूर में इन्द्रादि लोकपालों के वज्रादि आयुधों का पूजन करें।

मंत्र का पुरश्चरण करके दूर्वा से होम करें।

## ॥ श्रीराहु पञ्चविंशति नाम स्तोत्रम् ॥

**विनियोगः– ॐ अस्य श्री राहु पंचविंशन्नाम-स्तोत्रस्य वामदेव ऋषिः, गायत्री छन्दः, श्री राहुर्देवता, श्री राहुप्रीत्यर्थे पाठे विनियोगः।**

**ऋष्यादि न्यासः – शिरसि वामदेव ऋषये नमः। मुखे गायत्रीछन्दसे नमः। हृदि श्रीराहुर्देवतायै नमः। सर्वाङ्गे श्रीराहुप्रीत्यर्थे पाठे विनियोगाय नमः।**

**राहुर्दानवमंत्री च सिंहिका चित्त नंदनः।**
**अर्धकायः सदाक्रोधी चन्द्रादित्य-विमर्दनः॥**
**रौद्रो रुद्रप्रियो दैत्यः स्वर्भानुर्भानुभीतिदः।**
**ग्रहराजः सुधापायी राकातिथ्यभिलाषकः॥**
**कालदृष्टिः कालरूपः श्रीकण्ठहृदयाश्रितः।**
**विधुन्तुदः सैंहिकेयो घोररूपो महाबलः॥**
**ग्रहपीड़ाकरो दंष्ट्री रक्तनेत्रो महोदरः।**

**॥ फलश्रुति ॥**

**पञ्चविंशतिनामानि स्मृत्वा राहुं सदा नरः॥**
**यः पठेन् महतीं पीडां तस्य नश्यति निश्चितम्।**
**आरोग्यं पुत्रमतुलां श्रियं धान्यं पशूंस्तथा॥**
**ददाति राहुस्तस्मै यः पठेत् स्तोत्रमनुत्तमम्।**
**सततं पठते यस्तु जीवेत् वर्ष शतं नरः॥**

***॥ श्री स्कन्द पुराणे श्री राहु स्तोत्रम् ॥***

## राहु मङ्गल स्तोत्रम्

जिस व्यक्ति की कुडली में राहु मङ्गल साथ हों वे इस स्तोत्र को शिव व कार्तिकेय के सामने पढें तो विशेष लाभ होगा। इससे जातक का क्रोध शान्त होता है। उन्नति प्राप्त होती है।

**राहुः सिंहल देशजश्च निऋतिः कृष्णाङ्ग शूर्पासनो ।**
**यः पैठीनसिगोत्र संभव समिद्दुर्वा मुखो दक्षिणः ॥**
**यः सर्पाद्यधिदैवते च नितिः प्रत्यधिदेवः सदा ।**
**षट्त्रिंशः शुभकृत् च सिंहिका सुतः कुर्यात् सदा मङ्गलम् ॥**

इस स्तोत्र के पहले राहु के २५ नाम का स्तोत्र पढ़ें।

## ॥ श्रीराहु कवचम् ॥

**विनियोग :-** ॐ अस्य श्रीराहु कवचस्य चन्द्रमा ऋषिः, अनुष्टुप् छन्दः, श्रीराहुर्देवता, राँ बीजं, नमः शक्तिः, स्वाहा कीलकं, श्रीराहु प्रीत्यर्थे पाठे विनियोगः।

**ऋष्यादिन्यास :-** शिरसि चन्द्रमा ऋषये नमः। मुखे अनुष्टुप् छन्दसे नमः। हृदि श्रीराहु देवतायै नमः। गुह्ये राँ बीजाय नमः। पादयोः नमः शक्तये नमः। नाभौ स्वाहा कीलकाय नमः। सर्वाङ्गे श्रीराहु प्रीत्यर्थे पाठे विनियोगाय नमः।

| मन्त्रः | करन्यास | षडङ्गन्यास |
|---|---|---|
| राँ | अंगुष्ठाभ्यां नमः। | हृदयाय नमः। |
| रीँ | तर्जनीभ्यां नमः। | शिरसे स्वाहा। |
| रूँ | मध्यमाभ्यां नमः। | शिखायै वषट्। |
| रैं | अनामिकाभ्यां नमः। | कवचाय हुम्। |
| रौं | कनिष्ठिकाभ्यां नमः। | नेत्रत्रयाय वौषट्। |
| रः | करतलकरपृष्ठाभ्यां नमः | अस्त्राय फट्। |

॥ ध्यानम् ॥

**प्रणमामि सदा राहुं शूर्पाकारं किरीटिनम् ।**
**सैंहिकेयं करालास्यं लोकानामभयङ्करम् ॥**

॥ स्तोत्रम् ॥

नीलाम्बरः शिरः पातु ललाटं लोक वन्दितः ।
चक्षुषी पातु मे राहुः श्रोत्रे त्वर्द्धशरीरवान् ॥
नासिकां मे धूम्रवर्णः शूलपाणिर्मुखं मम ।
जिह्वा मे सिंहिकासूनुः कण्ठं मे कंठिनाङ्घ्रिकः ॥
भुजङ्गेशो भुजौ पातु नील माल्याम्बरः करौ ।
पातु वक्षस्थलं मन्त्री पातु कुक्षिं विधुन्तुदः ॥
कटिं मे विकटः पातु ऊरू मे सुरपूजितः ।
स्वभानुर्जानुनी पातु जङ्घे मे पातु जाड्यहा ॥
गुल्फौ ग्रहपतिः पातु पादौ मे भीषणाकृतिः ।
सर्वाण्यङ्गानि मे पातु नीलश्चन्दन भूषणः ॥

॥ फलश्रुति ॥

राहोरिदं कवचमृद्धिदं वस्तुदं यो भक्त्या
पठत्यनुदिनं नियतः शुचिः सन् ।
प्राप्नोति कीर्तिमतुलां श्रियमृद्धिमायुरारोग्य-
मात्मविजयं च हि तत् प्रसादात् ॥

*॥ इति श्रीमहाभारते द्रोणपर्वे श्रीराहुकवचम् ॥*

## ॥ राहुशान्ति प्रयोगः ॥

### रोगलक्षण

वातरोग, हिचकी, शिरःशूल, अतिसार, प्रदर, अम्लीय विकार, मूर्छा, मन्दबुद्धि, आलस्य, अविवेक, हकलाना, हाथ पैरों में कमजोरी, नशे की आदत, जुआ सट्टा प्रवृत्ति, राजनैतिक असफलता, चरित्रहीनता, धोखा, चोरी, अपयश, व अनेक विघ्न राहु के कारण होते हैं।

### उपचार

१. राहुयंत्र को बुधवार या शनिवार को एवं आर्द्रा, स्वाति, शतभिषा नक्षत्रों में पूजन कर धारण करें।
२. श्वेतचन्दन की माला धारण करें। श्वेतचन्दन का प्रयोग करें। स्फटिक के

शिवलिङ्ग का पूजन शुभ रहे।

३. लोध्रफूल, भुजेहुये तिल, मोती, गजमद, कस्तूरी, इत्यादि के स्नान से राहु पीड़ा दूर होवे।

गुग्गल, हींग, हरताल, मनःशिला, बिनौला, को लोहपात्र में भिगायें, महिषश्रृंग या लौहपात्र से स्नान करने से राहुपीड़ा दूर होवे।

४. दान - अभ्रक, लोहा, सीसाकत्तीर, कांस्य, तिल, नीलावस्त्र, ऊन, छाग, ताम्रपात्र, सप्तधान्य, उड़द, गोमेद, कालापुष्प, तेल, कम्बल, घोड़ा एवं खड्ग के दान से राहु पीड़ा दूर होवे।

५. रत्न - गोमेद, एपीटाइट स्टोन को धारण करना शुभ रहें।

## ॥ श्रीराहु अष्टोत्तरशत नामावली ॥

ॐ रां राहवे नमः।
ॐ रां सैंहिकेयाय नमः।
ॐ रां विदुतुन्दाय नमः।
ॐ रां सुरशत्रवे नमः।
ॐ रां तमसे नमः।
ॐ रां प्रणये नमः।
ॐ रां गार्ग्याननाय नमः।
ॐ रां सुरागवे नमः।
ॐ रां नीलजीमूतसङ्काशाय नमः।
ॐ रां चतुर्भुजाय नमः।
ॐ रां खड्गखेटकधारिणे नमः।
ॐ रां वरदायकहस्ताय नमः।
ॐ रां शूलायुधाय नमः।
ॐ रां मेघवर्णाय नमः।
ॐ रां कृष्णाध्वजपताकवते नमः।
ॐ रां दक्षिणाशामुखस्थाय नमः।
ॐ रां तीक्ष्णदंष्ट्राकराय नमः।
ॐ रां शूर्पाकारासनस्थाय नमः।
ॐ रां गोमेदाभरणप्रियाय नमः।
ॐ रां माषप्रियाय नमः।
ॐ रां काश्यपर्षिनन्दनाय नमः।
ॐ रां भुजगेश्वराय नमः।
ॐ रां उल्कापातयित्रे नमः।
ॐ रां शूलनिधिपाय नमः।
ॐ रां कृष्णसर्पराज्ञे नमः।
ॐ रां वृषत्वराव्रतास्याय नमः।
ॐ रां अर्धशरीराय नमः।
ॐ रां जाड्यप्रदाय नमः।
ॐ रां रवीन्दुभीकराय नमः।
ॐ रां छायास्वरूपिणे नमः।

ॐ रां कठिनाङ्गाय नमः।

ॐ रां द्विषचक्रभेदकाय नमः।

ॐ रां करालास्याय नमः।

ॐ रां भयङ्कराय नमः।

ॐ रां क्रूरकर्मणे नमः।

ॐ रां तमोरूपाय नमः।

ॐ रां श्यामात्मने नमः।

ॐ रां नीललोहिताय नमः।

ॐ रां किरीटिने नमः।

ॐ रां नीलवसनाय नमः।

ॐ रां शनिसामन्त वर्त्मगाय नमः।

ॐ रां चाण्डालवर्णाय नमः।

ॐ रां आत्मर्क्षभवाय नमः।

ॐ रां मेषभवाय नमः।

ॐ रां शनिवत् फलदाय नमः।

ॐ रां  शूलाय नमः।

ॐ रां अपसव्यगतये नमः।

ॐ रां उपरागकराय नमः।

ॐ रां सूर्येन्दुच्छविह्लादकराय नमः।

ॐ रां नीलपुष्पविहाराय नमः।

ॐ रां ग्रहश्रेष्ठायनमः।

ॐ रां अष्टमग्रहाय नमः।

ॐ रां कबन्धमात्रदेहाय नमः।

ॐ रां यातुधानकुलोद्भवाय नमः।

ॐ रां गोविन्दवरपात्राय नमः।

ॐ रां देवजातिप्रविष्टकाय नमः।

ॐ रां क्रूराय नमः।

ॐ रां घोराय नमः।

ॐ रां शनेर्मित्राय नमः।

ॐ रां शुक्रमित्राय नमः।

ॐ रां अगोचराय नमः।

ॐ रां मौनये नमः।

ॐ रां गङ्गास्नानदात्रे नमः।

ॐ रां स्वगृहे भूबलाढ्याय नमः।

ॐ रां स्वगृहेऽन्यबलहृते नमः।

ॐ रां मातामहकारकाय नमः।

ॐ रां चन्द्रयुतचाण्डाल-
जन्मसूचकाय नमः।

ॐ रां जन्मसिंहाय नमः।

ॐ रां राज्यदात्रे नमः।

ॐ रां महाकायाय नमः।

ॐ रां जन्मकर्त्रे नमः।

ॐ रां राज्यधात्रे नमः।

ॐ रां मत्तकाज्ञानदाय नमः।

ॐ रां जन्मकान्याराज्यदात्रे नमः।

ॐ रां जन्महानिदाय नमः।

ॐ रां नवमे पित्ररोगाय नमः।

ॐ रां पञ्चमेशोकदायकाय नमः।

ॐ रां द्यूने कलत्रहन्त्रे  नमः।

ॐ रां सप्तमे कलहप्रदाय नमः।

ॐ रां षष्ठे वित्तदात्रे नमः।

ॐ रां चतुर्थे वैरदात्रे नमः।

ॐ रां नवमे पापदात्रे नमः।
ॐ रां दशमेशोकदात्रे नमः।
ॐ रां आदौ यशः प्रदात्रे नमः।
ॐ रां अन्ते वैरप्रदात्रे नमः।
ॐ रां कलात्मने नमः।
ॐ रां गोचराचराय नमः।
ॐ रां धने ककुत्प्रदाय नमः।
ॐ रां पञ्चमे दृषद् श्रृङ्गदाय नमः।
ॐ रां स्वर्भानवे नमः।
ॐ रां बलिने नमः।
ॐ रां महासौख्यप्रदात्रे नमः।
ॐ रां चन्द्रवैरिणे नमः।
ॐ रां शाश्वताय नमः।
ॐ रां सूरशत्रवे नमः।
ॐ रां पापग्रहाय नमः।
ॐ रां पूज्यकाय नमः।
ॐ रां पाठीरपुरनाथाय नमः।
ॐ रां पैठीनसकुलोद्भवाय नमः।
ॐ रां भक्तरक्षाय नमः।
ॐ रां राहुमूर्तये नमः।
ॐ रां सर्वाभीष्टफलप्रदाय नमः।
ॐ रां दीर्घाय नमः।
ॐ रां कृष्णाय नमः।
ॐ रां अशिरसे नमः।
ॐ रां विष्णुनेत्रारये नमः।
ॐ रां देवाय नमः।
ॐ रां दानवाय नमः।

*॥ इति श्रीराहु अष्टोत्तरशत नामावली ॥*



# ॥ श्री केतुतन्त्रम् ॥

## केतु नक्षत्रों में जन्में जातक के रोग

अश्विनी, मघा एवं मूल केतु के नक्षत्र है। अश्विनी की आकृति घोड़े जैसी, मघा की घर जैसी तथा मूल की आकृति सिंह की पूंछ जैसी होती है।

**अश्विनी** – इस नक्षत्र में जन्में जातक को अपस्मार, ज्वर आदि योग का भय रहता है।

**मघा** – इस नक्षत्र में जन्में जातक को हृदय की कमजोरी, मानसिक चिन्ता, पथरी, पृष्ठशूल, निर्णय लेने की शक्ति में कमी, पेट व पेशाब की तकलीफ तथा दन्त रोग की शिकायत रहती है।

**मूल नक्षत्र** – दुर्घटना भय, चोट, ऑपरेशन, जख्म का देरी से भरना, बवासीर, भगन्दर, आकस्मिक रोग, नेत्ररोग, जङ्घा पीड़ा, पैरों में कमजोरी, झनझनाहट, कमर दर्द, वाति व्यधि रोग होते हैं।

## ॥ अथ केतु वैदिकमंत्रप्रयोगः॥

**मंत्रः– ॐ केतुं कृण्वन्नकेतवेपेशोमर्य्याऽअपेशसे ॥ समुष द्भिरजायथा ॥१ ॥**

**विनियोगः– केतुं कृण्वन्निति मंत्रस्य मधुऋषिः। गायत्री छंदः। केतुर्देवता। अपेशसे इति बीजम्। मर्य्या शक्तिः। केतुप्रीत्यर्थे जपे विनियोगः।**

**ऋष्यादि न्यासः– ॐ मधु ऋषये नमः शिरसि ॥१ ॥ ॐ गायत्री छन्दसे नमः मुखे ॥२ ॥ ॐ केतुदेवतायै नमः हृदये ॥३ ॥ ॐ अपेशसे इति बीजाय नमः गुह्ये ॥४ ॥ मर्य्याशक्तये नमः पादयोः ॥५ ॥ विनियोगाय नमः सर्वाङ्गे।**
इति ऋष्यादिन्यासः।

**करन्यास :-** ॐ केतुंकृण्वन् इत्यङ्गुष्ठाभ्यां नमः ॥१ ॥ ॐ अ केतवे इति तर्जनीभ्यां नमः ॥२ ॥ ॐ पेशोमर्य्या इति मध्यमाभ्यां नमः ॥३ ॥ ॐ अपेशसे अनामिकाभ्यां नमः ॥४॥ ॐ समुषद्भिः कनिष्ठिकाभ्यां नमः ॥५॥ ॐ अजायथाः करतलकरपृष्ठाभ्यां नमः ॥६ ॥ इति करन्यासः।

**हृदयादिन्यास -** ॐ केतुंकृण्वन्निति हृदयाय नमः ॥१ ॥ ॐ अकेतवे शिरसे स्वाहा ॥२ ॥ ॐ पेशोमर्य्या शिखायै वषट् ॥३ ॥ ॐ अपेशसे कवचाय हुं ॥४ ॥ ॐ समुषद्भिर्नेत्रत्रयाय वौषट् ॥५ ॥ ॐ अजायथा इत्यस्त्राय फट् ॥६ ॥ इति हृदयादिन्यासः।

**मंत्रन्यास -** ॐ केतुं शिरसि ॥१ ॥ ॐ कृण्वन् ललाटे ॥२ ॥ ॐ अकेतवे मुखे ॥३ ॥ ॐ पेशो हृदये ॥४॥ ॐ मर्य्या नाभौ ॥ ॥५॥ ॐ अपेशसे कट्याम् ॥६ ॥ ॐ समूर्वोः ॥७ ॥ ॐ उषद्भिर्जानुनोः ॥८ ॥ ॐ अजायथाः पादयोः ॥१ ॥ इति मंत्रन्यासः।

एवं न्यासं कृत्वा ध्यायेत्।

॥ अथ ध्यानम् ॥

**धूम्रो द्विबाहुर्वरदो गदाभृद्गृध्रासनस्थो विकृताननश्च ।**
**किरीटकेयूर विभूषितांबरः सदास्तु मे केतुगणः प्रशांतः ॥१ ॥**

इति ध्यात्वा मानसोपचारैः संपूज्य जपं कुर्यात्।

केतोः सप्त सहस्त्राणि ७००० जपसंख्या प्रकीर्तिता॥ ततो जपान्ते कुशसमित्तिलपायसघृतैर्दशांशहोमः॥ अन्यत्सर्वं पूर्ववत्।

॥ अथ दानद्रव्याणि ॥

**वैडूर्यरत्नं सतिलं च तैलं सुकंबलं चापि मदो मृगस्य ।**
**शस्त्रं च केतोः परितोषहेतोश्छागस्य दानं कथितं मुनीन्द्रैः ॥**

***॥ इति केतु मंत्र जप प्रयोगः ॥***

## ॥ केतु तान्त्रिक मंत्राः ॥

**षडक्षर मंत्र :-** कं केतवे नमः।

**सप्ताक्षर मंत्र :-** ॐ कें केतवे नमः।

दोनो मंत्रो के ऋषि ब्रह्मा। छन्द पंक्ति। षडक्षर के बीज एवं शक्ति कं है।

॥ ध्यानम् ॥

वन्दे केतुं कृष्णवर्णं कृष्णवस्त्र विभूषणम् ।
वामोरू-न्यस्त-तद्धस्तं साभयेतर-पाणिकम् ॥

**दशाक्षर मंत्र – ॐ प्रां प्रीं प्रौं कं केतवे स्वाहा।**

**अन्यच्च– ॐ स्त्रां स्त्रीं स्रौं सः केतवे नमः।**

**॥ यंत्रार्चनम॥**

षट्कोण एवं भूपूर बनावें।




**प्रथमावरणम् – ( षट्कोणे )**
**ॐ कां हृदयाय नमः। ॐ कीं शिरसे स्वाहा। ॐ कूं शिखायै वषट्। ॐ कैं कवचाय हुं। ॐ क्रौं नेत्रत्रयाय वौषट्। ॐ कः अस्त्राय फट्।**

**द्वितीवारणम्** – भूपूर में इन्द्रादि लोकपालों का पूजन करें।

**ॐ इन्द्राय नमः। ॐ अग्नये नमः। ॐ यमाय नमः। ॐ नैर्ऋतिये नमः। ॐ वरुणाय नमः। ॐ वायवे नमः। ॐ कुबेराय नमः। ॐ ईशानाय नमः। ॐ ब्रह्मणे नमः। ॐ अनन्ताय नमः।**

**तृतीयावरणम्** – भूपूर में लोकपालों के वज्रादि आयुधों का पूजन करें।

मंत्रो का पुरश्चरण करके **कुशों** से होम करें।

## ॥ श्री केतु विंशतिनाम स्तोत्रम् ॥

केतुः कालः कलयिता धूम्रकेतुर्विवर्णकः ।
लोककेतुर्महाकेतुः सर्वकेतुर्भयप्रदः ॥
रौद्रो रुद्रप्रियो रुद्रः क्रूरकर्मा सुगन्धधृक् ।
पलाशपुष्पसंकाशः चित्रयज्ञोपवीतधृक् ॥
तारागणविमर्दी च जैमिनेयो ग्रहाधिपः ।

॥ फलश्रुति ॥

एतद् विंशति नामानि केतोर्यः सततं पठेत् ।
तस्य नश्यन्ति बाधाश्च सर्वाः केतु-प्रसादतः ॥
धनधान्यपशूनां च भवेत् वृद्धिर्न संशयः ॥

*॥ इति श्री स्कन्द पुराणे श्रीकेतोर्विंशति नाम स्तोत्रम् संपूर्णम् ॥*

## ॥ श्री केतु कवचम् ॥

**विनियोग :-** ॐ अस्य श्री केतु कवचस्य त्र्यम्बक ऋषिः, अनुष्टुप् छन्दः, श्रीकेतुर्देवता, श्रीकेतु-प्रीत्यर्थे पाठे विनियोगः।

**ऋष्यादि न्यास :-** शिरसि त्र्यंबकऋषये नमः। मुखे अनुष्टुप् छन्दसे नमः। हृदि श्रीकेतुर्देवतायै नमः। सर्वाङ्गे श्रीकेतुप्रीत्यर्थे पाठे विनियोगाय नमः।

॥ ध्यानम् ॥

क्रूरं करालवदनं चित्रवर्णं किरीटिनम् ।
प्रणमामि सदा केतुं ध्वजाकारं ग्रहेश्वरम् ॥
चित्रवर्णः शिरः पातु भालं धूम्र समद्युतिः ।
पातु नेत्रे पिङ्गलाक्षः श्रुती मे रक्त लोचनः ॥
घ्राणं पातु सुवर्णाभश्चिबुकं सिंहिकासुतः ।
पातु कण्ठं च मे केतुः स्कन्धौ पातु ग्रहाधिपः ॥
हस्तौ पातु सुरश्रेष्ठः कुक्षिं पातु महाग्रहः ।
सिंहासनः कटिं पातु मध्यं पातु महाऽसुरः ॥
उरू पातु महाशीर्षो जानुनी मेऽति कोपनः ।
पातु पादौ च मे क्रूरः सर्वाङ्गं नरपिङ्गलः ॥

॥ फलश्रुति ॥

इतीदं कवचं दिव्यं सर्वरोगविनाशनम् ।
शत्रु विनाशं भूतानां शमनं सर्व सिद्धिदम् ॥
बहुना किमिहोक्तेन यद्यन्मनसि वर्तते ।
तत् सर्वं भवेत्तस्य कवचस्य च धारणात् ॥

यः पठेच्छृणुयाद्वापि सर्वत्र विजयी भवेत् ॥

*॥ श्रीब्रह्माण्ड पुराणे श्रीकेतु कवचम् ॥*

# ॥ केतुशान्ति प्रयोगः॥

## रोगलक्षण

चर्मरोग, हड्डियों की पीड़ा विकार, वातव्याधि, श्वास, कृमिरोग, अनिद्रा, फोड़ा फुंसी, रक्तविकार, चेचक, गर्भपात्, शिशुदौर्बल्यता, आपरेशन योग, दांत की पीड़ा, शस्त्राघात्, दुर्घटना, शत्रुबाधा साधना के विघ्न केतु के कारण होते हैं।

## उपचार

१. केतुयंत्र को बुधवार के दिन या अश्विनी, मघा एवं मूलनक्षत्रों में पूजन कर धारण करें।

२. अश्वगंधा की जड़ को पूजन कर धारण करें।

३. सूअर के द्वारा खोदी गई मिट्टी, पर्वत की मिट्टी, बकरी का दूध ये सब एक लौह पात्र में भिगो देवें। शनिवार या बुधवार को शाम को स्नान करें।
   देवदारु, सरसों तथा लोबान उबाल कर स्नान करने से अनिष्ट दूर होवे।

४. **दान** – कस्तूरी, तिल, छाग, कालावस्त्र, ध्वजा, सप्तधान्य, कम्बल, उड़द, वैडूर्य, लहसुनियां, फिरोजा, कालापुष्प, तेल, सुवर्ण, लोहा एवं शस्त्र का दान करना चाहिये।

५. **रत्न** – लहसुनिया, फिरोजा, वैडूर्य धारण करें।

# ॥ श्रीकेतु अष्टोत्तरशत नामावलि ॥

**ॐ कें केतवे नमः।**
**ॐ कें स्थूलशिरसे नमः।**
**ॐ कें शिरोमात्राय नमः।**
**ॐ कें ध्वजाकृतये नमः।**
**ॐ कें नवग्रहयुताय नमः।**
**ॐ कें सिंहिकागर्भसम्भवाय नमः।**
**ॐ कें महाभीतिकराय नमः।**
**ॐ कें चित्रवर्णाय नमः।**
**ॐ कें पिङ्गलाय नमः।**
**ॐ कें फलधूम्रसङ्काशाय नमः।**
**ॐ कें तीक्ष्णदंष्ट्राय नमः।**
**ॐ कें महोरगाय नमः।**

ॐ कें रक्तनेत्राय नमः।
ॐ कें चित्रकारिणे नमः।
ॐ कें महासुराय नमः।
ॐ कें तीव्रकोपाय नमः।
ॐ कें पापकण्टकाय नमः।
ॐ कें क्रोधनिधये नमः।
ॐ कें छायाग्रहविशेषकाय नमः।
ॐ कें अन्त्यग्रहाय नमः।
ॐ कें महाशीर्षाय नमः।
ॐ कें सूर्यारये नमः।
ॐ कें पुष्पवत्ग्रहिणे नमः।
ॐ कें वरहस्ताय नमः।
ॐ कें गदापाणये नमः।
ॐ कें चित्रशुभ्रधराय नमः।
ॐ कें चित्रध्वजपताकाय नमः।
ॐ कें घोराय नमः।
ॐ कें चित्ररथाय नमः।
ॐ कें शिखिने नमः।
ॐ कें कुलुत्थभक्षकाय नमः।
ॐ कें वैडूर्याभरणाय नमः।
ॐ कें उत्पातजनकाय नमः।
ॐ कें शुक्रमित्राय नमः।
ॐ कें मन्दसखाय नमः।
ॐ कें शिखिनेनापकाय नमः।
ॐ कें अन्तर्वेदिने नमः।
ॐ कें ईश्वराय नमः।
ॐ कें जैमिनिगोत्रजाय नमः।
ॐ कें चित्रगुप्तात्मने नमः।
ॐ कें दक्षिण-मुखाय नमः।
ॐ कें मुकुन्दवरपात्राय नमः।
ॐ कें असुरकुलोद्भवाय नमः।
ॐ कें घनवर्णाय नमः।
ॐ कें लम्बदेहाय नमः।
ॐ कें मृत्युपुत्राय नमः।
ॐ कें उत्पातरूपधराय नमः।
ॐ कें अदृश्याय नमः।
ॐ कें कालाग्निसन्निभाय नमः।
ॐ कें नरपीठकाय नमः।
ॐ कें ग्रहकारिणे नमः।
ॐ कें सर्वोपद्रवकारकाय नमः।
ॐ कें चित्रप्रसूताय नमः।
ॐ कें अनलाय नमः।
ॐ कें सर्वव्याधिनाशनाय नमः।
ॐ कें अपसव्यप्रचारिणे नमः।
ॐ कें नवमे पापदाय नमः।
ॐ कें पञ्चमे शोकदाय नमः।
ॐ कें उपराग-गोचराय नमः।
ॐ कें पुरुषकर्मणे नमः।
ॐ कें तुरीये सुखप्रदाय नमः।
ॐ कें तृतीये वैरदाय नमः।
ॐ कें पापग्रहाय नमः।
ॐ कें स्फोटकारकाय नमः।

ॐ कें प्राणनाथाय नमः।
ॐ कें पञ्चमे श्रमकारकाय नमः।
ॐ कें द्वितीयेस्फुटवाक्दात्रे नमः।
ॐ कें विषाकुलितवक्त्रकाय नमः।
ॐ कें कामरूपिणे नमः।
ॐ कें सिंहदन्ताय नमः।
ॐ कें सत्येऽप्यनृतवते नमः।
ॐ कें चतुर्थेमातृनाशनाय नमः।
ॐ कें नवमे पितृनाशनाय नमः।
ॐ कें अन्ते वैरप्रदाय नमः।
ॐ कें सुतानन्दनबन्धकाय नमः।
ॐ कें सर्पाक्षिजाताय नमः।
ॐ कें अनङ्गाय नमः।
ॐ कें कर्मराश्युद्भवाय नमः।
ॐ कें उपान्ते कीर्तिदाय नमः।
ॐ कें सप्तमे कलहप्रियाय नमः।
ॐ कें अष्टमे व्याधिकर्त्रे नमः।
ॐ कें धने बहुसुखप्रदाय नमः।
ॐ कें जनने रोगदाय नमः।
ॐ कें ऊर्ध्वमूर्धजाय नमः।
ॐ कें ग्रहनायकाय नमः।
ॐ कें पापदृष्टये नमः।
ॐ कें खेचराय नमः।
ॐ कें शाम्भवाय नमः।
ॐ कें अशेषजनपूजिताय नमः।
ॐ कें शाश्वताय नमः।
ॐ कें नटाय नमः।
ॐ कें शुभाशुभफलप्रदाय नमः।
ॐ कें धूम्राय नमः।
ॐ कें सुधापायिने नमः।
ॐ कें अजिताय नमः।
ॐ कें भक्तवत्सलाय नमः।
ॐ कें सिंहासनाय नमः।
ॐ कें केतु मूर्तये नमः।
ॐ कें रवीन्दु द्युति नाशकाय नमः।
ॐ कें अमराय नमः।
ॐ कें पीडकाय नमः।
ॐ कें अमर्त्याय नमः।
ॐ कें विष्णु दृष्टाय नमः।
ॐ कें असुरेश्वराय नमः।
ॐ कें भक्तरक्षाय नमः।
ॐ कें वैचित्र्यकपोतस्यन्दनाय नमः।
ॐ कें विचित्रफलदायिने नमः।
ॐ कें भक्ताभीष्टफलप्रदाय नमः।

*॥ इति श्रीकेतु अष्टोत्तरशत नामावली ॥*

## राहु केतु की सुप्तावस्था

लाल किताब में ग्रह के जागृत व सुप्तावस्थ के संबध मे अलग रूप से बताया गया है। जातक की जन्म पत्रिका में दूसरे भाव में ग्रह होवे तथा दशम भाव में कोई ग्रह न हो तो कर्मभाव कमजोर होने से दूसरे भाव का ग्रह सुप्तावस्था में चला जायेगा। इसका अर्थ यह है कि जब कोई भी ग्रह कर्म का साथ नहीं देगा तो धन देने वाला ग्रह क्या करेगा।

धन घर दूसरे भाव में ग्रह नहीं है एवं नवम दशम भाव में ग्रह हो तो नवम का ग्रह सुप्त हो जायेगा।

इन दोनों योगों से यदि राहु सुप्त है तो सुसराल में मङ्गल कार्य, विवाहादि कार्य होने के बाद जागृत होगा। उस समय जातक की आयु ३६ से ४२ वर्ष होगी। ४४ से ४८ के मध्य आर्द्रा, स्वाति, या शतभिषा में जन्में जातक को कष्ट होगा।

प्रथम या द्वितीय सन्तान के जन्म के बाद जातक का केतु जागृत हो जायेगा। इससे जातक को शुभ फल मिलेंगे। ४८ वर्ष की आयु के बाद जातक धर्म, कर्म, समाज सेवा के अधिक कार्य करता है।

**नाग करण** – तिथि के आधे भाग को करण कहते हैं। अत: एक तिथि में दो करण होते हैं। अमावस्या के उत्तरार्ध भाग में ''नाग'' करण होता है। अत: अमावस्या को जिस दिन नाग करण होवे उस दिन नाग शान्ति करना उत्तम है।

**नक्षत्र लिङ्ग** – अश्विनी नक्षत्र पुर्ल्लिग है तथा मघा, आर्द्रा, स्वाति नक्षत्र स्त्रीलिङ्ग है।

**शेषनाग के नेत्र** – बद्रीनाथ धाम के गरीब ही एक नर पर्वत पर एक शिला है जहाँ नेत्राकृति बनती है जिन्हें शेषनाग के नेत्र कहे जाते हैं।

## राहु–बुध–शुक्र एवं यदुवंश

बृहस्पति ग्रह की पत्नि तारा से बुध उत्पन्न हुआ। बुध के पुत्र पुरूरवा हुये तथा इनसे ''आयु'' आदि ६ पुत्र उत्पन्न हुये। बुध के प्रपौत्र आयु का विवाह राहु की कन्या से हआ, उनसे नहुष आदि ५ पुत्र हुये। नहुष के यति, ययाति आदि ६ पुत्र हुये। ययाति से शुक्राचार्य की पुत्री देवयानी का विवाह हुआ। अत: बुध–राहु व शुक्र का समधि हुआ। इसी कारण राहु दोष की शान्ति के लिये बुधवार श्रेष्ठ माना है।

इसी प्रकार बुध-राहु व शुक्र आपस में समधि होने से राहु मिथुन, कन्या, वृष व तुला राशि में हानिकारक नहीं माना गया है।

ययाति व देवयानि से यदु व तुर्वसु नामक दो पुत्र हुये। यदु की ४३ वीं पीढी में शूरसेन हुये, उनके पुत्र वासुदेव हुये, जो भगवान कृष्ण के पिता हुये।

## ॥ अथ श्रीमृत्युलांगूल स्तोत्रम् ॥

**विनियोग:- ॐ अस्य श्रीमृत्युलांगूल मंत्रस्यानुष्टुप् छन्दः, कालाग्निरुद्रा देवताः, वसिष्ठऋषिर्यमो देवता मृत्यूपस्थाने विनियोगः।**

**अथातो योग जिह्वा मधुमति वाजिन्यामेवाहं कालपुरुषमूर्ध्वलिङ्गं विरूपाक्षं विश्वरूपाय नमो नमः ।वर वृषभाय फेनकपिलरूपाय नमो नमः ।पशुपतये नमो नमः। ॐ क्रां क्रीं स्वः॥ य इदं मृत्युलांगूलं त्रिसन्ध्यं कीर्तयति स ब्रह्महत्यां व्यपोहति। स्वर्णस्तेयोऽस्त्येयि भवति, गुरुदाराभि गम्योऽगमी भवति, सर्वेभ्यः पातकेभ्यः उपपातकेभ्यश्च सद्यो विमुक्तो भवति, सकृज्जपितेन मंत्रेणानेन गायत्र्यास्त्वष्ट सहस्राणि भवन्ति। अष्टौ ब्राह्मणान् ग्राहयित्वा ब्रह्मरुद्रलोकमवाप्नोति। यः कश्चिन्न ददाति स श्वेतकुष्ठी, कुनखी भवति। यः कश्चिद्दीयमानं न गृह्णाति सोऽन्धो वधिरो भवति। मृत्यावुपस्थिते षणमासादर्वाक् मंत्रोऽयं विस्फुरति॥ अस्य मृत्युलांगूलाख्य महामंत्रस्य सकृज्जपेन भगवान् धर्मराजो मे प्रीयताम्।**

### ॥ मंत्र ॥

**ॐ ऋतं सत्यं परंब्रह्म पुरुषं कृष्णपिङ्गलम् ।**
**उर्ध्वलिगं विरूपाक्षं विश्वरूपाय नमो नमः ॥**
**ऋतं नष्टं यदा काले षणमासेन मरिष्यति ।**
**सत्यं तु पञ्चमे मासे, परंब्रह्म चतुर्थके ॥**
**पुरुषं तु तृतीये वै द्वितीय कृष्णपिङ्गलम् ।**
**उर्ध्वलिङ्गन्तु मासेन, विरूपाक्षं तदर्धके ॥**
**विश्वरूपं तृतीयेऽह्नि सद्यश्चैव नमो नमः ।**

*॥ इति श्रीमृत्युलांगूल स्तोत्रम् ॥*

## ॥ विधानम् ॥

जिज्ञासुजन इस मृत्युलांगूल स्तोत्र का पाठ दीपमाला, ग्रहण या महाशिवरात्री आदि पर्व के दिन से प्रारंभ करें। गुरुमुख से एक बार श्रवण कर लिया जाए तो उत्तम है। अन्यथा भगवान् श्रीसदाशिव को गुरु मानकर उनकी मूर्ति या चित्र के सामने प्रथमपर्व के दिन इस स्तोत्र के ११ पाठ करें और **ऋतंसत्यं मंत्र की ११ माला जप लेवें।** पर्व के प्रथम दिन इतना ही करना है। तदुरान्त प्रतिदिन नित्यकर्म के बाद एक बार स्तोत्र पाठ करना और रात्रि को सोते समय केवल तीन बार **ऋतंसत्यं परंब्रह्म** इस पूरे मंत्र का जप करके सो जाना चाहिये। प्रतिदिन एक स्तोत्र पाठ और रात्रि को सोते समय ३ बार मंत्र का जप नियमित रूप से होता रहेगा तो ६ मास पूर्व मृत्यु का ज्ञान हो जायेगा। वह इस प्रकार कि जिस दिन मंत्र का ऋतं शब्द भली-भांति उच्चारण नही हो या इस शब्द पर जिह्वा अटक जावें तो समझ लेना चाहिए कि मृत्युदेव या धर्मराज के घर का आमंत्रण आ गया है। ६ मास के भीतर जो भी सत्कार्य और परिवार का प्रबंध करना है वह कर देना चाहिए। जिस दिन सत्यं शब्द ठीक से उच्चारित न हो या इस शब्द पर जिह्वा अटक जाये तो समझ लो कि अब मृत्यु में पाँच मास शेष है। इसी प्रकार जिस दिन परंब्रह्म शब्द ठीक से उच्चारित न हो तो समझ लेना चाहिए की अब आयु के ४ मास शेष रहे है। पुरुषं शब्द से तीन मास, कृष्णपिङ्गलं शब्द से दो मास, उर्ध्वलिङ्गं शब्द से एक मास, विरूपाक्षं शब्द से १५ दिन, विश्वरूपं शब्द से ३ दिन और नमो नमः शब्द के ठीक उच्चारण न होने से उसी दिन तत्काल मृत्यु समझना चाहिये।

# ॥ अथ गरुड माला मन्त्रः॥

गरुड एवं सर्प के बैर है। गरुड सर्प का संहारक है, अतः गरुड मन्त्र के प्रभाव से विष योग नष्ट होता है। गरुड मन्त्र का प्रयोग टोना टोटका के तथा अभिचार कर्म की निवृत्ति के लिये भी किया जाता है। जब श्रीराम व लक्ष्मण को रावण ने नागपाश में बाँध दिया था तो गरुड़जी ने ही उन्हे पाश से मुक्त करवाया था। प्राचीन समय में षट्कर्म (मारण, मोहन, उच्चाटनादि) हेतु गरुड के कई प्रयोग प्रचलित थे इसलिये इस विषय को गुप्त रखने के लिये कहा गया था कि **"ज्योतिषी गारुडी विद्या पिता पुत्रं न देयत्"**।

अतः गरुड मन्त्र के स्मरण से आत्मबल की वृद्धि, शरीर में स्फुर्ति प्राप्त होती है जिससे कालसर्प या अशुभ ग्रहों के कारण प्राप्त उदासीनता नकारात्मक विचार, अशुभ का भय नष्ट हो जाता है। व्यक्ति अपने आत्मबल को प्राप्त कर नये सिरे से पुनः अपने कार्य में जुट जाता है, और उसे सफलता अवश्य प्राप्त होती है। निम्न स्तोत्र का पाठ करने से परिवार में व्याप्त संकट, सर्प भयादि दोष दूर होते हैं -

## ॥ आशुगारुड मालामन्त्राः॥

**विनियोगः - ॐ अस्य श्री आशु गारुड़ स्तोत्रस्य शंख ऋषिः अनुष्टुप् छन्दः श्री आशुताक्ष्र्यो देवता, गां बीजं, गों शक्तिः, गूः कीलकं मम सर्वारिष्ट निवाणार्थे आशुगरुडप्रीत्यर्थे जपे विनियोगः।**

**गां, गीं, गूं, गें, गौं, गः** से षड्ङ्गन्यास करे।

॥ ध्यानम् ॥

**आजानोस्तप्त हेमप्रभममलहिमं प्रख्यमानं हि तस्मा**
**दाकर्ण कुङ्कुमाभं भ्रमरकुलमिवश्यामलं मूर्ध्नि केशम् ।**
**ब्रह्माण्डव्याप्तदेहं भुजमहि प्रवैर्भूषणैर्भूषिताङ्गम्**
**पिङ्गाक्षं ताक्ष्र्य दंष्ट्रं वरदमभयदं ताक्ष्र्यमुग्रं नमामि ॥**

**(१) ॐ नमो भगवते श्री आशुगरुडाय गरुडाय महागरुडाय समस्ताण्डबहि - स्त्रैलोक्यनायकाय नागशोणिततीर्थाय पक्षिराजाय विष्णुवाहनाय सर्वसर्वान् संहर संहर मर्दय-२ मोटय-२ त्रोटय-२ भ्रमय-२ मुञ्च-२ आगच्छ-२**

